तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्' वा. चि. अ. १ ) इति। अत एव चरके कट्वम्ललवणान् परित्यज्य तरुणज्वरे पाचकत्वेन तिक्तको रसः पित्तघ्नो निर्दिष्टः। यदाह-'लङ्घनं स्वेदनं कालो यवागूस्तिक्तको रसः। पाचनान्यविपक्कानां दोषाणां तरुणज्वरे' ( च. चि. अ. ३ ) इति। ( कालोऽत्राष्टाह[1] इति )। अन्ये त्वाहुः—रुद्रकोपसंभवत्वेन देवतात्मकत्वात् पूजार्हत्वमुपदर्शितम्। यदाह विदेहः—'ज्वरस्तु पूजनैर्वाऽपि सहसैवोपशाम्यति' इति। हरिवंशेऽपि 'ज्वरस्त्रिपादस्त्रिशिराः षड्भुजो नवलोचनः। [2]भस्मप्रहरणो रौद्रः कालान्तकयमोपमः' इति मूर्तिमानेवोक्तः। बहुविधमपि ज्वरं संक्षेपेणाह—ज्वरोऽष्टधेत्यादि। अष्टत्वं विवृणोति-पृथगित्यादि। तच्च संप्राप्तौ विवृतम् ॥ १ ॥

विमर्शः—ज्वर सब रोगों में प्रधान है; क्योंकि उसकी उपस्थिति का अनुपस्थिति प्रत्येक व्याधि में महत्वपूर्ण स्थान रखती है अतः सर्वप्रथम ज्वर का ही वर्णन किया जाता है। सम्पूर्ण शारीर रोगों में ज्वर की उत्पत्ति सर्वप्रथम हुई है इसलिये भी ज्वर प्रधान है। ज्वर सभी रोगों में बलवान् भी है अतएव चरक ने इसे मृत्यु नाम भी दिया है। इस व्याधि से शरीर और मन दोनों ही एक समान प्रभावित होते हैं। जन्म और मरण दोनों अवस्थाओं में ज्वर की सत्ता अवश्यम्भावी है अर्थात् जीवन को स्थिर रखना या नष्ट करना ज्वर के विशिष्ट तापक्रमों पर निर्भर है। इससे संसार का कोई भी प्राणी मुक्त नहीं है। इस प्रकार की व्यापकता दूसरे रोगों में नहीं पायी जाती अतः ज्वर को ही प्रधान माना गया है। चरक ने भी ( चि. अ. ३ ) में इसी बात को कहा है।

विभिन्न प्राणियों में ज्वर के विशिष्ट नाम भी दिये जाते हैं यथा—हाथियों में पाकल, घोड़ों में अभितापन, गायों में ईश्वर, मनुष्यों में ज्वर, बकरी और भेड़ों में प्रलाप, ऊँट में अलस, भैंसों में हारिद्र, मृगों में मृग रोग, पक्षियों में अभिघात, मछलियों में इन्द्रमद, पतङ्गों में पक्षपात तथा सर्पों में अक्षिक नाम दिया जाता है; ऐसा 'पालकाप्य' में कहा है। जल में नीलिका, भूमि मे ऊसर, वृक्षों में कोटर आदि नाम से ज्वर का उल्लेख ग्रन्थान्तरों में मिलता है।

मूल श्लोक में ज्वर के विप्रकृष्ट कारण कुपित रुद्र के निःश्वास से ज्वर की उत्पत्ति का प्रतिपादन करते हुए एक ऐतिहासिक घटना का दिग्दर्शन कराया गया है। अत्यन्त प्राचीनकाल में दक्षप्रजापति की कन्या सती ने अपने पिता के शतशः विरोध करने पर भी स्वयवर में शंकर जी का ही वरण किया। दक्ष एव शकर का पूर्व से ही कटु सम्बन्ध चला आ रहा था। वैवाहिक घटना ने इस सम्बन्ध को कटुतर बनाने के लिये अग्नि में घृत का कार्य किया। इसके पश्चात् कदाचित् दक्ष ने एक महान् यज्ञ का आयोजन किया जिसमें तत्कालीन सभी महान् विभूतियों ( देवताओं ) को आमन्त्रित किया गया था, किन्तु जानते हुए भी शकरजी की सर्वथा उपेक्षा की गयी। सती बिना आमन्त्रण के ही पति के अनेकशः निषेध करने पर भी हठपूर्वक यज्ञ में जाने को तैयार हो गयी। इसीलिये भगवान् शंकर ने अपने कुछ विशिष्ट गणों ( सेनापतियों ) के साथ सती को यज्ञ में जाने की अनुमति दे दी। वहां पहुँचने पर सती का कोई सम्मान नहीं किया गया और न वहां शंकर के लिये ही कोई आदर का स्थान था। इस आत्मग्लानि के वशीभूत होकर सती ने योगाग्नि द्वारा अपना शरीर भस्म कर डाला। इस समाचार की सूचना पाते ही शिव के गणों ने युद्ध आरम्भ कर दिया। तत्पश्चात् शंकर जी भी वहां आ पहुँचे और अपना तृतीय नेत्र खोलकर उन्होंने क्रोधपूर्वक श्वास छोड़ा जिससे ज्वर रोग की उत्पत्ति हुई। कतिपय

१. अयं पाठः क. ख. पुस्तकयोर्नोपलभ्यते। २. 'मूर्तिमान् हरजो ज्ञेयः पापिनां नाशकारकः' इति क. पुस्तके पाठः। ख पुस्तके उत्तरार्धो न पठ्यते।

विचारों का कथन हैं कि यज्ञ में सती ने अपने तथा अपने पति के घोर अपमान को न सह सकने के कारण आत्मघात कर लिया। इस समाचार की सूचना पाते ही भगवान् शंकर की क्रोधाग्नि प्रज्वलित हो उठी, एवं उन्होंने ससैन्य आकर नगर को घेर लिया। यज्ञ में दक्ष के अनेक सहयोगी राजा आये हुए थे। उन सभी ने शंकर का सामना किया। इस प्रकार वहाँ तुमुल युद्ध हुआ एव अनेक संहारक तथा विषैले अस्त्रों का प्रयोग किया गया, जिसके फलस्वरूप विविध रोगों की उत्पत्ति हुई। उनमें से ज्वर विशेष है अतः सर्वप्रथम उसका ही वर्णन किया जाता है।

इस प्रकार की ऐतिहासिक घटना के उपाख्यान चिकित्साशास्त्र की दृष्टि से नितान्त अनुपयोगी हैं। अतः उक्त कथा को ज्वर की उत्पत्ति का रूपक मानकर कोपोद्भव का अर्थ तैजस करना चाहिये। तात्पर्य यह कि शरीर में तेजोगुण की वृद्धि के कारण ही ज्वर की उत्पत्ति होती है। क्रोध को आग्नेय माना गया है, क्योंकि चरक ने **'क्रोधात् पित्तम्'** क्रोध से पित्त की वृद्धि होती है, ऐसा कहा है। **शरीरान्तः संचारी** पित्त को ही सुश्रुत ने अग्नि संज्ञा प्रदान[1] की है इस प्रकार **'सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्'** इस वचन के अनुसार पित्तवर्धक क्रोध का भी आग्नेय स्वरूप सिद्ध हो जाता है। यदि क्रोध आग्नेय न होता तो उससे पित्त की वृद्धि भी असम्भव थी। उक्त सिद्धान्त के आधार पर ही प्रत्येक ज्वर में पित्त को प्रकृतिस्थ रखने वाले उपचार किये जाते हैं। इसी आशय से वाग्भट ने भी कहा है—पित्त के बिना ऊष्मा या गर्मी नहीं हो सकती और ज्वर बिना ऊष्मा या तापक्रम बढ नहीं सकता, इसलिये ज्वर में पित्त को कुपित करने वाले औषधादि द्रव्यों का परित्याग कर देना चाहिये। चरक ने भी नवीन ज्वर में अन्य पाचक रसों को छोडकर पित्तशामक तिक्त रस का पाचन के लिए उपदेश किया है।

दक्ष का अर्थ वायु और रुद्र का अर्थ अग्नि है। वायु की विकृति से अग्नि की विकृति और इन दोनों की विकृति से ज्वर की उत्पत्ति होती है। ज्वर में कोष्ठस्थ अग्नि-विकृति हो जाती है। इसका निर्देश माधव ने **'मिथ्याहारविहाराभ्याम्'** आदि श्लोक के द्वारा किया है।

साधारणतया ज्वर एवं सन्ताप को पर्यायवाची समझा जाता है, वस्तुतः सन्ताप से शरीर की तापवृद्धि ही समझनी चाहिये। किन्तु तापक्रम की वृद्धि ज्वर का विशिष्ट लक्षण मात्र है; स्वयं ज्वर नहीं; क्योंकि चरक ने कहा है—

**ज्वरप्रत्यात्मिकं लिङ्गं सन्तापो देहमानसः। ज्वरेणाविशता पूर्वं न हि किञ्चिन्न तप्यते॥**
तथा—**सन्तापः सारुचिस्तृष्णा साङ्गमर्दो हृदि व्यथा। ज्वरप्रभाव**······( च. चि. अ. ३ )

इस प्रकार अङ्गमर्द, अरुचि आदि अन्य लक्षणों से युक्त विशिष्ट प्रकार की तापक्रम वृद्धि को ही ज्वर कहते है। तापक्रम एवं लक्षणों की विशेषता के आधार पर ही ज्वरों की सापेक्ष निश्चिति होती है। विशिष्ट सम्प्राप्ति तथा अनेक लक्षणों का समूह होने के कारण ज्वर भी अन्य रोगों के समान रोग की श्रेणी में ही गिना जाता है। इसके अतिरिक्त यह अन्य लक्षणों मे भिन्नता होते हुए भी सम्पूर्ण विशेषतः औपसर्गिक रोगों की किसी अवस्था में अनिवार्य रूप से पाया जाता है। काम-क्रोध आदि मानसिक विकार, अंशुघात आदि अनौपसर्गिक कारणों से भी ज्वर की उत्पत्ति होती है। इन सभी मे तापक्रमवृद्धि के साथ साथ अन्य विशिष्ट लक्षणों का भी समावेश रहता है। ज्वर और तापक्रम

१. तत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः, आहोस्वित् ? पित्तमेवाग्निरिति अत्रोच्यते—न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिष्वभिवर्तमानेष्वग्निवदुपचारः क्रियतेऽन्तरग्निरिति। क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिरेकादतिप्रवृद्धे शीतक्रियोपयोगादागमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति। ( सु. सू. अ. २१ )

वृद्धि का घनिष्ठ साहचर्य रहने पर भी दोनों को एक नहीं माना जा सकता, क्योंकि आन्त्रिक ज्वर, रोहिणी (Diphtheria) तथा तृणाणुमयता (Septicaemia) में कदाचित् ताप की उपस्थिति नहीं भी रहती। अन्तर्वेग ज्वर में भी साधारणतया बाह्य ताप का अनुभव नहीं होता, रोगी को अन्तः-सन्ताप होता है तथा वह प्रलाप करता है। ऐसी दशा में केवल बाह्यताप से ही ज्वर का अनुमान नहीं किया जा सकता अपितु अन्य अनुषङ्गी लक्षणों का भी आश्रय लेना पड़ता है। इस प्रकार के ज्वर को निस्ताप ज्वर ( Apyrexial fever ) भी कहते हैं। चक्रपाणि ने भी कहा है। कि—वातश्लैष्मिक ज्वर में उष्णता की अनुभूति नही होती **'वातश्लेष्मकृतेऽपि ज्वरेऽनुष्णरूपस्तापो भवति'।**

**ज्वर की उत्पत्ति कैसे होती है ?** शरीर का स्वाभाविक तापक्रम ९७·४ से ९८·४ तक रहता है। यह मुख का तापक्रम है। कक्षा का तापक्रम इससे एक डिग्री कम रहता है। प्रातःकाल से सायंकाल का तापक्रम भी एक डिग्री अधिक रहता है। इससे अधिक तापक्रम का होना ज्वर का निदर्शक है।

ताप की दृष्टि से ससार के सम्पूर्ण प्राणियों को दो बडे वर्गों में विभक्त किया जा सकता है।

**१. विविधतापी**( Poikilothermic )—ऋतु तथा अन्य बाह्य परिस्थितियों के अनुसार इस वर्ग के प्राणियों का तापक्रम निरन्तर परिवर्तित होता रहता है। इनको शीतरक्तक ( Cold blooded ) प्राणी भी कहते हैं। इस श्रेणी में मेढक, साँप तथा कछुआ आदि आते हैं।

**२. समतापी** ( Homeothermic )—ऋतु तथा अन्य बाह्य परिस्थिति की अपेक्षा न करके इस वर्ग के प्राणियों के शरीर का ताप प्रकृत अवस्था में सदा समान रहता है। इनको उष्णरक्तक ( Warm blooded ) प्राणी कहते हैं। इस वर्ग में मनुष्य, पक्षी तथा अन्य स्तनधारी प्राणी आ जाते हैं।

शरीर में उष्णता की उत्पत्ति तथा उसका विनाश कार्य समान रूप में अबाध गति से चलता रहता है। इन दोनों क्रियाओं के प्रकृत रहने पर ही समतापी प्राणियों के शरीर का ताप निश्चित अंत तक स्थिर रहता है।

**उष्णता की उत्पत्ति**—प्रोभूजिन ( Protiens ), स्नेह तथा प्रङ्गोदीयों (Carbohydrates) के ज्वलन ( Oxidation ) से उष्णता की उत्पत्ति होती है। यह कार्य अल्पाधिक मात्रा में सम्पूर्ण शरीर में होता है किन्तु ऐच्छिक पेशियों के द्वारा यह कार्य अधिक होता है। जल एवं नमक का कम मात्रा में उपयोग करने से भी उष्णता बढ़ती है। साधारण नवयुवक व्यक्ति में प्रतिदिन ४ अंश ताप की वृद्धि होती है किन्तु शरीर के स्वाभाविक ताप पर इसका किञ्चित्मात्र भी प्रभाव नहीं पडता। आन्तरिक ताप के अतिरिक्त ग्रीष्मकालीन बाह्य ताप का भी शरीर के ताप पर कोई प्रभाव नहीं पड़ता।

**उष्णता का नाश**—शरीर की उष्णता का नाश त्वचा, फुफ्फुस, मल तथा मूत्र के द्वारा होता है। इनमें सबसे अधिक उष्णता का नाश त्वचा द्वारा होता है। त्वचा से ताप का नाश विकिरण ( Radiation ), संवहन ( Conduction ) तथा बाष्पीभवन ( Evaporation ) के द्वारा होता है। जिस अवस्था में बाह्य वातावरण का ताप साधारण रहता है तब विकिरण और संवहन से ताप का नाश होता है। किन्तु जब ग्रीष्म ऋतु में वातावरण का तापक्रम उच्चतम हो जाता है तो परिसरीय केशिकायें विस्फारित हो जाती हैं जिससे स्वेदग्रन्थियों की क्रियाशीलता बढ़ जाती है और वे अधिक स्वेद उत्पन्न करने लगते हैं। इस अवस्था में स्वेद के बाष्पीभवन से उष्णता का नाश होता है। जाड़ों में अधिक शीत के कारण केशिकायें संकुचित हो जाती हैं जिससे शरीर का ताप बाहर नहीं निकल पाता, वह सुरक्षित रहता है। उस अवस्था में भी

अनावश्यक प्रवृद्ध ताप का नाश फुफ्फुस एवं वृक्कों द्वारा होता है। वातावरण की क्लिन्नता ( वर्षाकाल में ), तङ्ग वस्त्र, स्वेदपिण्डों की अकार्यकारिता एवं त्वचा का स्वच्छ न रखना-इन कारणों से भी त्वचा द्वारा ताप का नाश नहीं होता।

इस प्रकार प्रकृत अवस्था में शरीर में उष्णता की उत्पत्ति एवं उसके विनाश का क्रम निरन्तर समान रूप से चलता रहता है। शरीर के ताप को सदा एक समान बनाये रखने के लिये समतापी ( Homeothermic ) प्राणियों के मस्तिष्क के कन्दाधरिक भाग ( Hypothalamic region ) में एक तापनियामक केन्द्र ( Heat regulating center ) रहता है। ताप को समान मात्रा में स्थिर रखने के लिये यह आवश्यक है कि उत्पत्ति के अनुपात से उसका नाश भी हो। नियामक केन्द्र यद्यपि दोनों क्रियाओं का नियमन करता है तथापि उष्णतोत्पत्ति की अपेक्षा उष्णतानाशन से इसका विशेष सम्बन्ध है। यह अपने सम्पर्क में आने वाले रक्त से शरीरान्तर्गत उष्णता का ज्ञान करके उसके अनावश्यक भाग का त्वचा या दूसरे साधनों से नाश करा देता है। इसी प्रकार शीत काल में बाह्यशीत से रक्षा करने के निमित्त त्वचागत वाहिनियों में सकोच कराकर तापनिर्हरण को रोकता है।

इस प्रकार तापनियामक केन्द्र, शरीर में उष्णता उत्पन्न करने वाली क्रियाओं ( Biochemical activities producing heat ) तथा ताप का निरन्तर विनाश करने वाले साधनों ( वृक्क, त्वचा, फुफ्फुस तथा मल ) से शरीर का ताप सदा साम्यावस्था में रहता है। जब तक यह केन्द्र अविकृत रहता है एवं ताप की उत्पत्ति और विनाश का क्रम नियमपूर्वक चलता रहता है तब तक शरीर का ताप भी प्राकृत ही रहता है। किन्तु जिस अवस्था में लू लगने, चोट लगने मस्तिष्कगत रक्तस्राव आदि अनौपसर्गिक कारणों तथा विष एवं रोगोत्पादक जीवाणुओं से उत्पन्न औपसर्गिक विष से विकृत हो जाता है तो शरीर का ताप भी स्वाभाविक नहीं रह पाता। शारीरिक ताप की वृद्धि का मुख्य हेतु उष्णता नाश की कमी है उष्णतोत्पत्ति की अधिकता नहीं।

स्वस्थावस्था या ज्वरितावस्था में भी रात्रि को सोते समय ऐच्छिक पेशियों का कार्य न होने से उष्णता की अधिक उत्पत्ति नहीं होती अतः प्रातःकाल में तापक्रम कुछ कम रहता है। किन्तु दिन में ऐच्छिक पेशियां क्रियाशील रहती हैं अतः ताप की अधिक वृद्धि होने से सायंकाल के समय तापक्रम प्रातःकाल की अपेक्षा अधिक रहता है। कभी कभी राजयक्ष्मा, मस्तिष्कावरण-शोथ तथा आन्त्रिक ज्वर में प्रातःकाल ज्वर बढ़ता है और सायंकाल को घटता है। यह चिन्ता-जनक स्थिति है। इसे विपरीत क्रम ( Reverse type ) कहते है।

रक्तप्रवाह में घूमते हुए जीवाणुजन्य या समवर्तजन्य विष से ताप की अत्यधिक उत्पत्ति एवं तापनियन्त्रक केन्द्र की विकृति के परिणामस्वरूप तापनिर्हरण की कमी का सम्मिलित परिणाम ही ज्वर है।

ज्वरोत्पत्ति का चरकोक्त इतिहास रूपकमात्र है। दक्ष, क्रोध और रुद्र का ठीक ठीक अर्थ समझ लेने पर रूपक की वास्तविकता स्पष्ट हो जाती है। दक्ष का अर्थ इन्द्रियां हैं। उनके अविवेक से प्रयुक्त मिथ्या आहार-विहार जीवाणुजन्य या समवर्तजन्य विष ही ज्वर के विशिष्ट लक्षण ताप की वृद्धि करने के कारण अपमान स्वरूप हैं। क्रोध तैजस माना गया है अतः औपसर्गिक या अनौपसर्गिक विष को प्रतिक्रिया से उत्पन्न शरीर की तैजस प्रवृत्ति को ही क्रोध कहते हैं। क्रोध का अधिष्ठाता देवता रुद्र को माना गया है अतः जहां भी क्रोध की सत्ता होगी वहां सर्वत्र रुद्र की उपस्थिति भी अनिवार्य है। तैजस प्रवृत्ति एक शक्ति है, शरीर में उसका नियामक तापनियन्त्रक केन्द्र है। विष द्वारा उसके विकृत होने से शरीर से ताप का निर्हरण कम होने पर ताप की वृद्धि होती है। इस प्रकार दोषों के प्रकोप या केन्द्र की विकृति

को ही यदि रुद्रकोप कहा जाय तो अनुचित न होगा। ज्वरोत्पत्ति के रूपक का सारांश (Summary of the raised temperature) निम्न है—

असात्म्य पदार्थों की शरीर में उपस्थिति (विषोत्पत्ति = दक्षप्रयुक्त अपमान) तापनियन्त्रक केन्द्र की विकृति (रुद्रकोप), धात्वग्निव्यापार रक्तप्रवाह की वृद्धि (कुपित रुद्र का निःश्वास), त्वचा द्वारा तापनिर्हरण का अभाव, ताप की वृद्धि=ज्वर।

ज्वरस्य सम्प्राप्तिमाह—

**मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः।**
**बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्यू रसानुगाः ॥ २ ॥**

मिथ्या आहार-विहार से प्रकुपित वात, पित्त या कफ आमाशय में आश्रित होने पर रस के साथ समस्त शरीर में व्याप्त होते हैं और कोष्ठाग्नि को बाहर निकाल कर ज्वर उत्पन्न करते हैं ॥ २ ॥

**संप्राप्तिमाह—मिथ्येत्यादि। आहारस्य मिथ्यात्वं प्रकृत्यादीनामाहारोपयोगहेतूनां विरुद्धत्वेनोपयोगः। यदाह चरकः—'तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति; तद्यथा 'प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि' (च. वि. अ. १) इति। अत्र प्रकृतिर्द्रव्याणां स्वाभाविकगुरुत्वलघुत्वादिगुणयोः, यथा माषमुद्गयोः, करणं संस्कारः, यथा—व्रीहेर्गुरोर्लघवो लाजाः, संयोगः संहतीभावः, यथा क्षीरमत्स्ययोः, राशिराहारद्रव्यस्यावयवेन समुदायेन च परिमाणं; देशो द्रव्योत्पत्तिप्रचारादिस्थानं; कालो नित्यगश्चावस्थिकश्च; उपयोगसंस्था उपयोगनियमः, यथा जीर्णान्न एव भुञ्जीत; उपयोक्ता स्वयं निरूपितात्मप्रकृत्यादिकः पुरुष इति। विहारस्य मिथ्यात्वमयथाबलमारम्भादि। आमाशयाश्रया इत्यनेनामाशयप्राप्तिव्यतिरेकेण दोषा ज्वरं नारभन्त इति प्रतिपादयति। आमाशयश्च 'नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः' (च. वि. अ २) इति चरकेणोक्तः। बहिर्निरस्य कोष्ठाग्निमिति कोष्ठाग्निरेव दोषोत्क्षिप्तो बहिर्निर्गत ऊष्मतया प्रतिभाति। कोष्ठाग्निमिति धात्वाद्यग्निनिरासार्थम्। ज्वरदा ज्वरकारिणः। रसानुगा रससम्बद्धाः, अवश्यं रसं दूषयित्वा ज्वरोत्पादका इति। एषा च संप्राप्तिः शारीराणामेव न त्वागन्तूनां, तेषां व्यथापूर्वकत्वं ततो वाताद्यनुबन्धः, इति जेज्जटः। अतएव सुश्रुते आगन्तुसंप्राप्तिः पृथगेव पठ्यते। यथा 'श्रमक्षताभिघातेभ्यो देहिनां कुपितोऽनिलः। पूरयित्वाऽखिलं देहं ज्वरमापादयेद् भृशम्' (सु. उ. अ. ३९) इति अत्र न आमाशयगत एव वायुः किंतूर्ध्वाधस्तिर्यक्प्रसवाहिस्रोतश्चराः। चरकेऽप्युक्तं 'तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्। सव्यथाशोथवैवर्ण्यं करोति सरुजं ज्वरम्' (च. चि. अ. ३) इति। ननु, आगन्तुज्वरेऽप्यूष्मोपलभ्यते, ऊष्मा च पित्तादृते नास्ति (वा. चि. अ. १) इत्युक्तम्, अत आगन्तुरपि शारीरः स्यात्। नैवम्, उत्तरकालं तदुत्पत्तेः। यदुक्तं 'आगन्तुर्हि व्यथापूर्वो ज्वरोऽष्टमो भवति; स किंचित्कालमागन्तुः केवलो भूत्वा [2]पश्चाद्दोषैरनुबध्यते' (च. नि. अ. १); तथा 'आगन्तुरन्वेति निजं विकारं निजस्तथाऽऽगन्तुमतिप्रवृद्धः' (च. सू. अ. १९) इति। ननु मिथ्याहारेत्यादिनैकैव संप्राप्तिरुक्ता, एतच्च न युक्तं, यतः संयोगभेदः, संयोगभेदश्च संयोगिभेदनिबन्धनः, संयोगिनश्चात्र वातादयो नानाविधाः, ततश्च संप्राप्तेरपि नानात्वं स्यात्; न हि वातपित्तयोर्यः संयोगः स एव कफपित्तयोरिति। उच्यते—अनेकैव संप्राप्तिः किंत्वेकजातीया, आशयदुष्ट्यादेः सर्वत्राविशेषेणाभिधानात्; एवमागन्तुसंप्राप्तिरपि संयोगभेदाद्भिन्नेति ॥ २ ॥**

---

१. 'आहारस्य द्रवाद्रव्यस्य' इति मु। २. 'आगन्तुर्हि व्यथापूर्वो जायते, पश्चान्निजैर्दोषैरनुबध्यते' इति क ख।

**विमर्श:**—आहार के उपयोग के साधन प्रकृति, करण आदि आठों का विरुद्ध उपयोग ही आहार का मिथ्यायोग[1] कहलाता है। चरक ने कहा भी है कि आहारविधि के आठ प्रमुख साधन होते हैं—

**'तत्र खल्विमान्यष्टावाहारविधिविशेषायतनानि भवन्ति, तद्यथा-प्रकृतिकरणसंयोगराशिदेशकालोपयोगसंस्थोपयोक्त्रष्टमानि'।**

**प्रकृति**—द्रव्यों का स्वाभाविक गुरुत्व एवं लघुत्व ही प्रकृति कहलाता है। यथा माष प्रकृति से गुरु और मूंग लघु होती है। इस गुरुत्व एवं लघुत्व का बिना विचार किये आहार का सेवन करना प्रकृति का मिथ्यात्व कहलाता है।

**करण**—द्रव्यों के स्वाभाविक गुणों में परिवर्तन करना ही करण है। यथा चावल गुरु है किन्तु उनसे बनाई गई खीलें लघु होती हैं।

**संयोग**—दो या बहुत सी वस्तुओं के मिश्रण को ही संयोग कहते हैं। इसके द्वारा एक नवीन वस्तु की उत्पत्ति होती है। कुछ वस्तुओं को मिलाकर खाना हानिप्रद होता है जैसे—दूध और मछली। अतः हानि से बचने के लिये इसका ज्ञान भी आवश्यक है। इसको न जानकर असंयोज्यों का संयोग करना आहार का संयोगजन्य मिथ्यात्व कहलाता है।

**राशि**—आटा, दाल, चावल तथा शाक आदि प्रत्येक खाद्य के पृथक्-पृथक् एवं सम्मिलित परिमाण का ज्ञान राशि के अन्तर्गत आता है। इससे भोजन की सम्पूर्ण एवं विभागशः मात्रा का निर्धारण होता है। मात्रा का बिना ज्ञान किये ही अमात्रावत् आहार करना आहार का राशिजन्य मिथ्यात्व कहा जाता है।

**देश**—खाद्यपदार्थ किस स्थान में उत्पन्न हुआ है इसका ज्ञान करके द्रव्य के लघुत्वादि गुणों का परिज्ञान करना देशज्ञान के अन्तर्गत समझना चाहिये। बिना इसके ज्ञान के गुरु को लघु एवं लघु को गुरु समझकर सेवन करने से रोगों की उत्पत्ति हो सकती है अतः आहार का देशजन्य मिथ्यात्व भी ज्वर का उत्पादक है।

**काल**—नित्यग एवं आवस्थिक भेद से काल दो प्रकार का है। ऋतुरूप काल को नित्यग एवं रोगावस्था के काल को आवस्थिक काल कहते हैं। ऋतु एवं रोगावस्था को ध्यान में रखते हुए ही तदनुकूल आहार का सेवन किया जाता है। इसका ज्ञान न होने पर कालजन्य आहार का मिथ्यात्व हो सकता है।

**उपयोगसंस्था**—उपयोग के नियम को ही उपयोगसंस्था कहते हैं। यथा-जीर्ण होने पर ही भोजन करें, उष्ण ही खायें, जल्दी न खायें इत्यादि भोजन सेवन के नियम है। इनका विरुद्ध उपयोग भी आहार का मिथ्यात्व ही है।

**उपयोक्ता**—आहार का सेवन करने वाला व्यक्ति उपयोक्ता कहलाता है। उसको भी अपनी प्रकृति एवं सात्म्यासात्म्य का विचार करके भोजन सेवन करना चाहिये। सात्म्य या असात्म्य का विचार बिना किये भोजन करना आहारमिथ्यात्व ही है।

इस प्रकार भोजन के उपर्युक्त आठ विचारणीय अंगों पर ध्यान न देने से आहारमिथ्यात्व का दोष उत्पन्न होता है और परिणामस्वरूप इससे ज्वर की या अन्य रोगों की उत्पत्ति होती है।

अपनी शक्ति से अधिक या बहुत कम कार्य करना ही विहार का मिथ्यात्व[2] कहलाता है। यथा-अतिव्यायाम, उपवास, रात्रि-जागरण तथा धातुक्षय आदि विहार वातदोष की वृद्धि के कारण है। इसी प्रकार पित्त और कफ के प्रकोपक विहार भी बताये गये हैं।

---

१. अकाले चातिमात्रं च ह्यसात्म्यं यच्च भोजनम्।
विषमं चापि यद्भुक्तं मिथ्याहारः स उच्यते॥

२. अशक्तः कुरुते कर्म शक्तिमात्रं करोति यः। मिथ्याविहार इत्युक्तः सदा तं परिवर्जयेत्॥

**आमाशयाश्रयाः**—चरक ने नाभि और स्तन के बीच में आमाशय की स्थिति मानी है **'नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः'**। इससे प्रायः महास्रोत मात्र का ग्रहण हो जाता है। वस्तुतः सभी ज्वरों में महास्रोत की विशेषतया आमाशय (Stomach) की विकृति होना अनिवार्य है।

**कोष्ठाग्निं बहिर्निरस्य**—कोष्ठाग्नि ही बाहर निकल कर त्वचागत होकर ताप को उत्पन्न करती है। सामान्यतया इसका यही अर्थ लगाया जाता है। वस्तुतः ज्वरितावस्था में या ज्वरसम्प्राप्ति-काल में पाचकरसों की कमी के कारण कोष्ठस्थ अग्नि मन्द हो जाती है किन्तु धात्वग्नि अधिक सक्रिय हो जाती हैं एवं त्वचागत ताप की वृद्धि होती है। इसको ही स्पष्ट करते हुए विजयरक्षित ने कहा है 'कोष्ठाग्निमिति धात्वाद्यग्निनिरासार्थम्।' अर्वाचीन शास्त्रज्ञों का भी यही मत है।

**रसानुगा**,—दूषित दोष रस धातु से मिलकर ही ज्वर को उत्पन्न करते है। ज्वर में रस का दूषित होना अनिवार्य है। रस दूषित होने से रसादिगत धात्वग्नियाँ अधिक क्रियाशील हो जाती है जिससे अधिक ऊष्मा की उत्पत्ति होती है। रस त्वचा के आश्रित रहता है अतः त्वचा में ही ताप की अनुभूति विशेष रूप से होती है। निज ज्वरों में आरम्भ से ही और आगन्तु ज्वरों में कुछ काल पश्चात् दोषों का अनुबन्ध हो जाने पर कोष्ठ की दुष्टि हो जाती है। पाचकरसों का स्राव कम या बन्द हो जाता है, अतएव तरुणज्वर में लंघन का उपदेश किया गया है। आमरस से स्वभावतः अधिक मल की उत्पत्ति होती है और उनसे स्वेद आदि का वहन करने वाले स्रोतों में भी अवरोध हो जाता है परिणामतः तापविकिरण कम होता है एवं रोगी का संपूर्ण शरीर उष्ण हो जाता है। निज ज्वरों में रस की सामता को दूर करने के लिये ही लंघन आदि उपाय किये जाते है—

**लंघनं स्वेदनं कालो यावाग्वस्तिक्तको रसः। पाचनान्यविपक्कानां दोषाणां तरुणे ज्वरे ॥**

महर्षि सुश्रुत ने भी आमाशयदुष्टि, जठराग्नि का नाश, रस तथा स्वेदवह स्रोतों के अवरोध को ज्वरोत्पत्ति की सम्प्राप्तिपरम्परा में माना है—

**दुष्टाः स्वहेतुभिर्दोषाः प्राप्यामाशयमूष्मणा। सहिता रसमागत्य रसस्वेदप्रवाहिणाम्**
**स्रोतसां मार्गमावृत्य मन्दीकृत्य हुताशनम्। निरस्य बहिरूष्माणं पक्तिस्थानाच्च केवलम्।**
**शरीरं समभिव्याप्य स्वकालेषु ज्वरागमम्। जनयन्त्यथ वृद्धिं च स्ववर्णं च त्वगादिषु ॥**

निज और आगन्तुक भेद से रोग दो प्रकार के होते है—**'निजागन्तुविभागेन तत्र रोगाः द्विधा स्मृताः'**। जेज्जट का कथन है कि यह सम्प्राप्ति निज या शारीर ज्वरों की ही है आगन्तुज की नहीं। सुश्रुत ने इसीलिये आगन्तु ज्वर की सम्प्राप्ति का वर्णन पृथक् किया है—

**श्रमक्षताभिघातेभ्यो देहिनां कुपितोऽनिलः। पूरयित्वाऽखिलं देहं ज्वरमापादयेद् भृशम् ॥**

यहां केवल आमाशयगत वायु का ग्रहण न करके सर्वशरीरव्यापी रसवाही स्रोतों में घूमने वाले वायु का ग्रहण है। चरक ने भी कहा है—अभिघात से उत्पन्न वायु रक्त को दूषित करता हुआ व्यथा, शोथ, विवर्णता तथा पीड़ा के सहित ज्वर को उत्पन्न[1] करता है। कविराज गणनाथसेन जी सरस्वती मिथ्या आहार-विहार को निज ज्वर का तथा वायु-जल आदि वाहक साधनों द्वारा वाहित विष को आगन्तुज ज्वर का कारण मानते हैं—

**'मिथ्याहारविहारादि निजस्यायतनं स्मृतम्। आगन्तोर्जलवाय्वादिवाहितं प्रायशो विषम् ॥'**

अब यहां सन्देह होता है कि आगन्तु ज्वर में भी गर्मी मिलती है और गर्मी बिना पित्त के नहीं होती अतः दोषानुबद्ध होनेसे आगन्तुज ज्वर को भी निज ही मानना चाहिये। किन्तु पश्चात् काल में पित्त का अनुबन्ध होने से ही गर्मी की उत्पत्ति होती है अतः आगन्तुज ज्वर शरीर से भिन्न है। आगन्तुज रोग भी कुछ काल पश्चात् दोषों से अनुबद्ध हो ही जाता है—

**'आगन्तुर्हि व्यथापूर्वो ज्वरोऽष्टमो भवति, स किंचित्कालमागन्तुः केवलो भूत्वा पश्चाद्दोषैरनुबध्यते'।**

इसके अतिरिक्त आगन्तुज रोग निज तथा निज आगन्तुज रूप में भी परिणत हो जाते हैं—

**'आगन्तुरन्वेति निजं विकारं निजस्तथागन्तुमपि प्रवृद्धः'।**

---

१. तत्राभिघातजो वायुः प्रायो रक्तं प्रदूषयन्। सव्यथाशोथवैवर्ण्यं करोति सरुजं ज्वरम् ॥

संयोगविशेष को ही सम्प्राप्ति कहते हैं । संयोगियों के भेद से सम्प्राप्ति में भी भेद होता है । इस प्रकार यद्यपि यहाँ वात-पित्त आदि विभिन्न दोषों के विभिन्न संयोगों से सम्प्राप्ति भी अनेक प्रकार की हो सकती है तथापि एकजातीय होने के कारण उसका भेद नहीं किया गया; क्योंकि सभी में मिथ्या आहार-विहार के कारण, आशयदुष्टि, कोष्ठाग्नि का नाश तथा रस की दुष्टि समान रूप से होती है । किन्तु आगन्तु ज्वर की सम्प्राप्ति संयोगभेद के कारण भिन्न ही है ।

**जीवाणुवाद—**

मिथ्या आहार विहार आदि श्लोक में ज्वरोत्पत्ति के लिये होने वाली विकृत ( Pathology ) का वर्णन किया गया है । माधव ने मिथ्या आहार-विहार को ही ज्वर का कारण माना है । किन्तु आजकल कतिपय जीवाणुओं का उपसर्ग भी ज्वरोत्पत्ति के लिये निदान की कोटि में माना जाता है । कुछ प्राचीन विद्वान् जीवाणुओं की सत्ता को स्वीकार करने में आपत्ति करते हैं । उनका कहना है कि यह अश्रुतपूर्व जीवाणुवाद क्या है ? प्राचीन महर्षियों ने भी जीवाणुओं को रोगों का कारण स्वीकार नहीं किया । जिस किसी रोग में जीवाणुओं की उपलब्धि होती है वहां इनको दोष एवं दूष्य के विकार से उत्पन्न होने वाला कार्य ही समझना चाहिये, कारण नहीं । इस प्रकार वे पाश्चात्त्यों के जीवाणुवाद को रोगों का कारण स्वीकार नहीं करते । उन विद्वानों से केवल इतना ही कहना है कि यह सिद्धान्त केवल कल्पना या अनुमान ही नहीं अपितु प्रत्यक्ष प्रमाण से भी सिद्ध हो चुका है कि जीवाणु रोग के कारण होते हैं । कुष्ठ एवं यक्ष्मा जैसे संक्रामक रोगों से पीड़ित रोगियों के रक्त तथा श्लेष्मा आदि में आंखों एवं अणुवीक्षण यन्त्र ( Microscope ) की सहायता से जीवाणुओं का प्रत्यक्ष दर्शन होता है । प्रत्येक संक्रामक रोग में ये विभिन्न स्वरूप के होते हैं । परीक्षाओं द्वारा यह प्रमाणित हो चुका है कि तत्तद् रोग के जीवाणुओं को यदि अन्यान्य प्राणियों के शरीर मे प्रविष्ट किया जाय तो तत्तद् रोग की ही उत्पत्ति होती है । इस अन्वयव्यतिरेक ( **यत्सत्त्वे यत्सत्त्वमन्वयः; यदभावे यदभावो व्यतिरेकः** ) से भी यह सिद्ध है कि जहां जहां संक्रामक रोग होंगे वहां वहां जीवाणुओं की सत्ता परमावश्यक है । इसके विपरीत जहां जहां ये जीवाणु नहीं होते वहां वहां संक्रामक रोगों की उत्पत्ति भी नहीं होती । इस प्रकार संक्रामक रोग और जीवाणुओं का परस्पर कार्यकारणभाव-सम्बन्ध सिद्ध हो जाता है । जीवाणुवाद-सिद्धान्त के प्रति प्राचीन महर्षियों की सम्मति भी प्रमाणस्वरूप है । कुष्ठाधिकार में सुश्रुत ने कहा है—'सभी कुष्ठ वातयुक्त, पित्तयुक्त, कफयुक्त एवं क्रिमियुक्त होते हैं, परन्तु उत्कर्ष एवं प्राबल्य के कारण दोषों के नाम का ग्रहण किया[1] जाता है । यहां क्रिमि कुष्ठ के सहचारी ही नहीं अपितु कुष्ठ के कारण भी कहे हैं; क्योंकि वाग्भट ने भी कहा है—

**रक्तवाहिसिरास्थाना रक्तजा जन्तवोऽणवः । अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः ।**
**केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः । षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥**

इस श्लोक में कुष्ठ को उत्पन्न करने वाले छ प्रकार के जीवाणुओं का वर्णन किया गया है यह 'कुष्ठैककर्माणः' शब्द से स्पष्ट है । इसी प्रकार सुश्रुत भी क्रिमिरोगप्रतिषेधीय अध्याय में क्रिमियों के नामों का वर्णन करते हुए कहते है कि वे क्रिमि रक्तवह संस्थान के रोगों को उत्पन्न करते हैं **'रक्ताधिष्ठानजान् प्रायो विकारान् जनयन्ति ते'** ( सु० उ० ५४ ) । इसके अतिरिक्त सुश्रुत ने जीवाणुकारणवाद की पुष्टि में कहा है—प्रसंग अर्थात् अति सम्पर्क अथवा स्त्रीप्रसंग से ( उपदंश एवं फिरंग ), शरीर के स्पर्श से ( खुजली आदि ), श्वास से या खांसने से ( श्लैष्मिक ज्वर या राजयक्ष्मा ), साथ में भोजन करने एवं साथ सोने से तथा दूसरे के वस्त्र या माला के धारण करने से

१. सर्वाणि कुष्ठानि सवातानि, सपित्तानि, सकफानि, सक्रिमीणि भवन्त्युत्सन्नतस्तु दोषग्रहणमभिभवात् । ( सु० नि० ५ )

कुष्ठ, ज्वर, शोष, नेत्राभिष्यन्द तथा अन्य औपसर्गिक रोग उत्पन्न होते है। यहा ज्वर से ग्रन्थिक ज्वर ( Plague ) आदि सक्रामक ज्वरों का ही ग्रहण करना चाहिये, सर्वसाधारण अनौपसर्गिक ज्वरों का नही। अन्य औपसर्गिक रोग से अनुक्त मसूरिका जैसे औपसर्गिक रोगों का ग्रहण करना चाहिये। एक मनुष्य से दूसरे मनुष्य मे जाकर सक्रामक रोग को उत्पन्न करने वाली कोई तीसरी वस्तु अवश्य है, अन्यथा वह रोग उत्पन्न नही हो सकता। यह वस्तु जीवाणु ही है जो एक मनुष्य से दूसरे में सक्रान्त होता है। ये जीवाणु अत्यन्त सूक्ष्म होने के कारण चर्मचक्षुओं से नही दीखते अत एव सुश्रुत ने **केशादाद्यास्त्वदृश्यास्ते'** के द्वारा उनको अदृश्य कहा है। इस वैज्ञानिक युग में उन अदृश्य जीवाणुओं का प्रत्यक्ष भी अणुवीक्षण यन्त्र की सहायता से इन चक्षुओं के द्वारा भी आज होने लगा है। इस प्रकार प्रमाणसमूह के द्वारा रोगोत्पत्ति में जीवाणुओं की कारणता सिद्ध हो जाती है। यह सिद्धान्त आर्षमतसम्मत भी है। अन्तर इतना है कि पाश्चात्य वैद्यग्रन्थो में इसका वर्णन विशद रूप से मिलता है। प्राचीनों ने इसका वर्णन समय एव परिस्थिति के अनुसार अतिसक्षेप में किया है। प्राचीन काल में यम-नियम आदि के पालन में सुदृढ एव शक्तिशाली शरीरों मे जीवाणु अपना प्रभाव नही जमा सकते थे। अतः उस समय इनका विस्तार से वर्णन करने की आवश्यकता प्राचीन ऋषियों को अनुभव नहीं हुई। आधुनिक काल में यम-नियम की परम्परा विलुप्त हो जाने से शरीर की स्वाभाविक शक्ति भी कम होती गयी जिससे रोगोत्पादक जीवाणुओं का प्रभाव मानव-शरीरों में व्यक्त होने लगा। 'आवश्यकता आविष्कार की जननी है' इस सिद्धान्त के आधार पर आधुनिकों ने अनवरत परिश्रम के उपरान्त जीवाणुवाद का सुविस्तृत विवेचन करने में सफलता प्राप्त की। यह सिद्धान्त सुपरीक्षित एव सत्य की कसौटी पर सुसिद्ध होने के कारण ग्राह्य है। इसका ज्ञान प्रत्येक आयुर्वेदज्ञ को पूर्णतया होना चाहिये। इसका प्रयोजन सक्रमण का प्रतिषेध एव निदानपरिवर्जन है, क्योंकि कहा भी है—

**'संक्षेपतः क्रियायोगो निदानपरिवर्जनम्'।**

इसी प्रसग में एक बात और स्मरणीय है कि जीवाणुवाद के कारण त्रिदोषवाद पर कोई आघात नही पहुंचता। सिद्धान्त की दृष्टि से इन दोनों मे कोई प्रतिद्वन्द्विता नही है। जीवाणु भी दोषों को प्रकुपित करके ही रोगों को उत्पन्न करते हैं। त्रिदोष को रोगों के प्रति साक्षात् कारणता है। जीवाणु परम्परया ही कारण की कोटि में आते है। तात्पर्य यह कि बिना दोषप्रकोप के रोगोत्पत्ति नहीं होती। कदाचित् जीवाणुसंक्रमण होने पर भी रोगोत्पत्ति नही होती किन्तु जीवाणु या अन्य आहार-विहार से प्रकुपित दोष अवश्य ही रोग को उत्पन्न करते हैं। इसीलिये वाग्भट ने कहा है—

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः। तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥**

जीवाणु और त्रिदोष का कार्यक्षेत्र ही भिन्न है। जीवाणु का कार्यक्षेत्र त्रिदोष है इसलिये वे त्रिदोष में ही विकृति उत्पन्न करते है। त्रिदोष का कार्यक्षेत्र शरीर है- इस प्रकार जीवाणुओं से प्रकुपित त्रिदोष ही शरीर में विकृति उत्पन्न करके रोग को उत्पन्न करता है। कभी कभी कुछ व्यक्तियों में जीवाणुसंक्रमण होने पर भी रोग की उत्पत्ति नही होती। इसका कारण त्रिदोष की सुदृढ साम्यावस्था ही है। आजकल इसको ही रोगप्रतिरोधक्षमता ( Immunity ) कहते हैं। जब तक दोष पूर्णतया साम्यावस्था में रहते हैं एवं प्रकोपक कारण जीवाणु की शक्ति अल्प होती है तब तक रोग की उत्पत्ति नहीं होती।

---

१. प्रसगाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात्। सहशय्यासनाच्चापि गन्धमाल्यानुलेपनात् ॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च। औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥
( सु० नि० ५ )

ज्वरसामान्यस्य लक्षणमाह—

**स्वेदावरोधः सन्तापः सर्वाङ्गग्रहणं तथा ।**
**युगपद्यत्र रोगे च स ज्वरो व्यपदिश्यते ॥ ३ ॥**

( सु. उ. अ ३९ )

स्वेद का अवरोध, सन्ताप एवं सर्वाङ्ग में पीड़ा ये लक्षण एक साथ जिस रोग में हों उसे ज्वर कहते हैं ॥ ३ ॥

ज्वरलक्षणमाह—स्वेदावरोध इत्यादि । स्वेदावरोधो घर्मानिर्गमः । ताप इतिवक्तव्ये[1] सन्तापग्रहणाद्देहेन्द्रियमनसां तापं लक्षयति । तदुक्तं चरके 'देहेन्द्रियमनस्तापी' ( च. चि. अ. ३ ) इति; 'इन्द्रियाणां च वैकृत्यं ज्ञेय सन्तापलक्षणम्' ( च. चि अ. ३ ) इति; तथा 'वैचित्त्यमरतिर्ग्लानिर्मनःसन्तापलक्षणम्' ( च. चि. अ. ३ ) इति । सर्वाङ्गग्रहणं सर्वाङ्गवेदना । युगपदिति मिलितमेतल्लक्षणं, प्रत्येकशो व्यभिचारात्; स्वेदावरोधो हि कुष्ठपूर्वरूपे तथा सन्तापो[2] दाहाख्ये रोगे, सर्वाङ्गग्रहणं सर्वाङ्गवातरोगे, इति । ननु पैत्तिके स्वेदागमात्, वातिके विषमारम्भविसर्गित्वात् सर्वाङ्गग्रहणाव्यवस्थितत्वेऽश्चाव्यापक लक्षणमिति । अत्र जेज्जटकार्तिककुण्डादयः समादधुः उत्सर्गापवादभावेन व्यवस्थिते । तन्न सङ्गतमित्यन्ये, विधौ ह्युत्सर्गापवादभावो न तु लक्षणे, अव्याप्त्यतिव्याप्त्योर्लक्षणदोषात्, तस्मात् स्वेदोऽग्निः 'स्विद्यतेऽनेन' इति व्युत्पत्त्या; तस्यावरोधो दोषव्याप्तिः । वातज्वरे यद्यपि वायोश्चलत्वेनारम्भविसर्गयोर्वैषम्यं, तथाऽपि सर्वदेहगतज्वरारम्भकदोषदुष्टय[3] निवृत्तेरनुद्भूतसर्वाङ्गग्रहणस्य विद्यमानत्वेवेति न व्यभिचारः । चरके तु ज्वरलक्षणं 'ज्वरप्रत्यात्मिकं[4] लिङ्गं सन्तापो देहमानसः' ( च. चि. अ. ३ ) इति । ननु, 'शारीरो जायते पूर्वं देहे मनसि मानसः' ( च चि ) अ. ३ )—इति चरकवचनाद्देहमनसोरन्योन्यव्यभिचारादलक्षणमिति चेत्; न, सूक्ष्मतरकालव्यवहितस्यान्यतररूपस्यावश्यंभावित्वात् । यथा—गुणवद् द्रव्यमिति द्रव्यलक्षणमिति ॥ ३ ॥

**विमर्शः**—केवल ताप न कहकर संताप का उल्लेख विशेष प्रयोजन से किया गया है। सन्ताप से शारीरिक सन्ताप ही नहीं अपितु इन्द्रिय एवं मन का सन्ताप भी ग्रहण होता है क्योंकि चरक ने कहा है कि **'देहेन्द्रियमनस्तापी'** ज्वर देह, इन्द्रिय एवं मन तीनों को सन्तप्त करता है। **'वैचित्त्यमरतिर्ग्लानिः मनःसन्तापलक्षणम्'** अर्थात् चित्त का क्षुभित रहना, किसी भी कार्य में मन न लगना एवं ग्लानि का अनुभव होना ये मनःसन्ताप के लक्षण हैं। ज्वर में भी ये लक्षण मिलते है अतः सन्ताप शब्द का ग्रहण करना ही उचित है। युगपत् शब्द से स्पष्ट है कि–ये सब लक्षण जहाँ एक साथ मिलेगे उसी को ज्वर कहते हैं। पृथक्-पृथक् एक एक लक्षण से युक्त व्याधि को ज्वर नहीं कह सकते। यदि प्रत्येक लक्षण को ज्वर माना जाय तब तो कुष्ठ आदि को भी ज्वर कहना पडेगा, क्योंकि स्वेदावरोध लक्षण कुष्ठ के पूर्वरूप में, सन्ताप दाह में और सर्वाङ्गग्रहण सर्वाङ्गवात रोग में पाया जाता है। चरक ने **'ज्वरप्रत्यात्मिकं लिङ्गं सन्तापो देहमानसः'** ज्वर का सामान्य लक्षण किया है। शारीरिक सन्ताप प्रथम शरीर और फिर मन में और मानस पहिले मन में पीछे से शरीर में होता है—**'शारीरो जायते पूर्वं देहे मनसि मानसः'**। इस वर्णन से पूर्वोक्त लक्षण सदोष है यह शका भी ठीक नहीं क्योंकि मन के बाद शरीर या शरीर के बाद मन में संताप अत्यल्प काल के अन्तर से होता है, जैसे उत्पत्ति-क्षण में निर्गुण द्रव्य में क्षणान्तर में ही गुणोत्पत्ति होने से 'गुणवद् द्रव्यम्' यह लक्षण सदोष नहीं होता।

---

१. 'कर्तव्ये' इति क ख। २. 'दाहाख्यो रोगः' इति क ख। ३. 'दोषदूष्यानुवृत्तेः' इति क।
४. 'ज्वरप्रत्यायकम्' इति क। 'ज्वरप्रत्यात्मकम्' इति ख।

आगे स्वेदावरोध आदि श्लोक के द्वारा ज्वरोत्पत्ति के लिये होने वाली सभी आवश्यक विकृतियों का वर्णन सक्षेप में किया गया है।

**स्वेदावरोधः**—स्वेद का न निकलना ही इसका अर्थ है। वस्तुतः ज्वरितावस्था में स्वेद-प्रवृत्ति नहीं होती। शरीरान्तर्गत ताप का निर्हरण करने में स्वेद बहुत बड़ा भाग लेता है। ज्वर में स्वेदावरोध होने का परिणाम तापक्रम की वृद्धि है। रक्त में विष की प्रचुरता होने पर स्वेद-ग्रन्थियों पर भार अधिक हो जाता है; अथवा आमरस उनमे अवरोध उत्पन्न कर देता है जिससे वे कार्य करना बन्द कर देती हैं। स्वेदावरोध इसी का[1] परिणाम है।

यदि इस शब्द के अर्थ को सकुचित न करके कुछ विस्तृत किया जाय तो ज्वर में होने वाली अन्य विशिष्ट अवस्थाओं का स्पष्टीकरण भी भलीभाँति हो सकता है। स्वेद शब्द को स्राव-सामान्य का उपलक्षण मानकर शरीर के अन्य स्रावों के अवरोध का सन्निवेश भी इसमें किया जा सकता है। वस्तुतः ज्वरितावस्था मे मुख, आमाशय, आन्त्र, वृक्क तथा अन्य ग्रन्थियों के स्राव कम या बन्द हो जाते हैं। आधुनिक विद्वान् भी इस सिद्धान्त के पोषक है—The secretions tend to dry up i. e those of the skin, mouth, alimentary tube Liver, pancreas and Kidneys' इससे स्पष्ट है कि स्राव को उत्पन्न करने वाले सभी अङ्ग ज्वरितावस्था में निष्क्रिय हो जाते हैं। परिसरीय केशिकाओं के विस्फारित हो जाने पर स्वेदग्रन्थियों को रक्त प्रचुर मात्रा में मिलने लगता है और वे स्वेद की उत्पत्ति अधिकता के साथ करती हैं। इस प्रकार स्वेदोत्पत्ति के निमित्त परिसरीय केशिकाओं का विस्फारित होना अत्यावश्यक है। रक्त में परिभ्रमण करने वाले ज्वरजनक विषों के कारण तापनियन्त्रक केन्द्र के अवसादित हो जाने से परिसरीय केशिकाओं का विस्फार नही होने पाता। इस प्रकार खाद्य की कमी, तथा विषों की या आमदोष की प्रचुरता के कारण स्वेदग्रन्थियों का कार्य अवरुद्ध हो जाता है। केशिकाओं के विस्फार न होने का परिणाम अन्य स्रावक ग्रन्थियों पर भी उक्त प्रकार का ही पड़ता है। आमाशय भी इसके प्रभाव से नहीं बच पाता। पाचन लिये मुख, आमाशय, आन्त्र, अग्न्याशय तथा यकृत् के स्रावों की परमावश्यकता रहती है। इन स्रावों के अवरुद्ध हो जाने से पाचन एवं प्रचूषण का कार्य भी बन्द हो जाता है अत एव आयुर्वेदज्ञों ने आमज्वर में आहार एवं कषायपान का निषेध किया है। यदि इस अवस्था में भी आहार प्रदान किया जाय तो पाचक रसों की अनुपलब्धि से भोजन का पाचन समुचित रूप में नहीं हो सकता एवं आमदोष की ही अधिकाधिक वृद्धि होगी। दोषों का पाचन न होने से ज्वर से मुक्ति भी नहीं मिलती अथवा विलम्ब से मिलती है। अतः इस अवस्था में भोजन न देना ही हितकर है। आमदोष का पाचन करने वाले आहार या औषध इस अवस्था में भी दिये जा सकते हैं। ऐसी चरक की सम्मति है—

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे॥**

दोषों का पाचन होने पर जब स्रोतों का अवरोध दूर हो जाता है तब आहार या कषाय का प्रयोग किया जा सकता है। अत्यल्प मात्रा में होने से रसौषधि का प्रयोग किसी भी अवस्था में निषिद्ध नहीं है।

मधुकोश टीका में पैत्तिक ज्वर में स्वेद के आधिक्य के कारण इस ज्वरलक्षण के अव्याप्त होने की आशंका से **'स्विद्यतेऽनेनेति स्वेदः अग्निः तस्यावरोधः'** यह अर्थ किया

१. **स्रोतसां सन्निरुद्धत्वात् स्वेदं ना नाधिगच्छति।**
स्वस्थानात् प्रच्युते चाग्नौ प्रायशस्तरुणे ज्वरे ( च. चि. ३ )

गया है वह ठीक नहीं, क्योंकि ऐसा अर्थ करने पर भी अव्याप्ति दोष से पिण्ड नहीं छूटता अतः ज्वर की निरामावस्था में ज्वर होने हुए भी भूख की अधिकता[1] होती है जो कि अग्नि के अवरोध होने पर सम्भव नहीं। वस्तुतः इस सामान्य लक्षण के अपवाद भी हो सकते है जो कि सुश्रुतसम्मत भी है क्योंकि आगे उन्होंने भी स्पष्ट कहा है कि **'न च स्विद्यति सर्वशः'** और इसकी टीका करते हुए डल्हण ने स्पष्ट किया है कि **'सर्वशः अर्थात् सर्वत्र न च स्विद्यति कचित् स्विद्यतीत्यर्थः।'** इसी मत का समर्थन जेज्जट आदि टीकाकारों ने भी करते हुए कहा है कि **'उत्सर्गापवादभावेन व्यवस्थितिः'**। अतः स्वेदावरोध का अर्थ पसीना न आना ही ठीक है।

**सन्तापः**—देह, इन्द्रिय एवं मन सभी में ताप की अनुभूत होती है **'देहेन्द्रियमनस्तापी'**। ताप या ऊष्मा उत्पन्न करना पित्त का गुण है, पित्त की वृद्धि होने पर ही सन्ताप हो सकता है अतः सभी ज्वरों को पित्तज मानकर उनमें पित्त का शमन करने वाली चिकित्सा का उपदेश किया गया है—

**'ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना।**
**तस्मात् पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्॥'**

शरीर का तापक्रम बढने पर उसका अनुभव त्वचा के स्पर्श द्वारा होता है। रक्त मे जीवाणु-विष या समवर्तजन्य विषों की प्रचुरता से उष्णता की अत्यधिक उत्पत्ति एव त्वचा आदि निर्हरण-मार्गों से उसके नाश की कमी के सम्मिलित परिणाम को ही सक्षेप में ताप की वृद्धि या सन्ताप कह सकते है। इस विषय का विस्तृत विवेचन प्रथम श्लोक की व्याख्या मे किया जा चुका है।

**सन्तापवृद्धि के लाभ**—यह क्रिया यद्यपि शरीर, मन एवं इन्द्रियों को कष्ट देने वाली प्रतीत होती है, किन्तु यथार्थतः इस क्रिया का प्रादुर्भाव शरीर को स्वस्थ बनाने के निमित्त ही होना है। यद्यपि अत्यधिक होने पर वह अनिष्ट-कारक होता है। वस्तुतः यह शरीर की प्रतिक्रियात्मक शक्ति का निदर्शक है। औपसर्गिक तथा अनौपसर्गिक उभयविध रोगों में इसका महत्त्व समान है। औपसर्गिक रोगों में उपसर्गकारी जीवाणु एवं शरीर की कोषाओं के युद्ध के फलस्वरूप ज्वर की उत्पत्ति होना अनिवार्य है। ज्वर की मन्दता उपसर्ग के सौम्य या शरीर के दुर्बल होने का परिचायक है। औपसर्गिक रोगों में तापक्रम की वृद्धि से निम्न लाभ होते है—

१. अधिक ताप से जीवाणु की वृद्धि में बाधा। शरीर के स्वाभाविक ताप पर जीवाणुओं की वृद्धि अच्छी होती है। ताप अधिक हो जाने पर उनकी वृद्धि नहीं होने पाती।

२. तापक्रम की वृद्धि होने से हृदय की गति भी तीव्र हो जाती है इससे विकृति का निराकरण करने के लिये विकृत स्थान में रक्त प्रचुर परिमाण मे पहुंच जाता है और भक्षकायाणु तथा प्रतियोगी पदार्थों के अधिक मात्रा में एकत्रित होने से उपसर्गकारी जीवाणु का विनाश करने में सरलता होती है।

ज्वर के उक्त लाभों को देखते हुए ही ज्वरहर औषधों से एकदम ज्वर को उतारना हितकर नहीं माना जाता।

**ज्वरस्य पूर्वरूपाणि व्याचष्टे—**

## श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः।
## इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु॥ ४॥
## जृम्भाऽङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः।

१. क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम्। (च. चि. अ. ३)

अप्रहर्षश्च शीतं च भवत्युत्पत्स्यति ज्वरे ॥ ५ ॥
( सामान्यतो विशेषात्तु जृम्भाऽत्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफादन्नारुचिर्भवेत् ॥ ६ ॥
रूपैरन्यतराभ्यां तु संसृष्टं द्वन्द्वजं विदुः ।
सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ॥ ७ ॥

( सु. उ. तं. अ. ३९ )

थकावट, चित्त की अस्थिरता या किसी काम में मन न लगना विवर्णता (Discolouration) मुख का स्वाद खराब होना, आंखों से पानी गिरना, ठण्डी हवा और धूप में बैठने की कभी इच्छा और कभी द्वेष होना जम्भाई, अगड़ाई तथा शरीर में भारीपन होना, रोंगटे खड़े होना, अरुचि, आंखों के आगे अंधेरा आना, किसी भी पदार्थ में रुचि न होना तथा कुछ सर्दी का प्रतीत होना ये ज्वर में सामान्य पूर्वरूप है। जम्भाई अधिक आना वात का, आँखों में जलन पित्त का और अन्न से अत्यधिक अरुचि होना कफ का विशिष्ट पूर्वरूप है। किन्हीं दो दोषों के विशिष्ट पूर्वरूप मिलने पर द्वन्द्वज के विशिष्ट पूर्वरूप होते हैं एवं सब दोषों का प्रकोप होने पर सभी दोषों के विशिष्ट पूर्वरूप प्रकट होते है ॥ ४-७ ॥

पूर्वरूपमाह—श्रम इत्यादि। श्रमः श्रान्तत्वमिव। अरतिरनवस्थितचित्तत्वम्, अरतिः क्रीडाभाव इति कार्तिकः। विवर्णत्वं म्लानगात्रत्वम्। यत्तु 'दुष्टाः स्वहेतुभिर्दोषाः'—इत्यारभ्य 'स्वकालेषु ज्वरागमम्। जनयन्त्यथ वृद्धिं च स्ववर्णांश्च त्वगादिषु'—( सु चि. अ. ३९ ) इति संप्राप्तौ वृद्धसुश्रुतवचनं, तदत्यर्थजृम्भादिवद्विशिष्टपूर्वरूपाभिप्रायेण, संप्राप्त्यवस्थापन्नदोषजन्यत्वात् पूर्वरूपस्येति। वैरस्यमिति [3]मुखस्य विरुद्धरसता। नयनप्लवोऽश्रुपूर्णनेत्रत्वम्। यदुक्तं चरके—'आलस्य[4] नयने सास्रे'—च. चि अ. ३ ) इत्यादि। आदिशब्दादम्बुज्वलनयोरप्यनिश्चितेच्छाद्वेषयोर्ग्रहणम्। उक्तं हि चरके—'ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ'-( च. चि. अ. ३ ) इति। अन्ये तु शैत्यौष्ण्यसाधर्म्याज्जलानलौ ग्राहयन्ति आदिशब्देन च शयनादिकम्। तमः अन्धकारप्रविष्टस्येवासंवित्तिः। अप्रहर्षः प्रीत्यभावः। ज्वलनेच्छया शीते लब्धे शीतं चेति वचनं शीतस्य विशेषेण बोधनार्थम्। चकारेण बालविद्वेषादिग्रहणमित्याहुः। उत्पत्स्यतीति भविष्यति ज्वरे। उत्पत्स्यतीति आत्मनेपदानित्यत्वेन; तच्च चक्षिङ इकारेण 'अनुदात्तङित आत्मनेपदम्' ( पा. अ. १।३।१२ ) इत्यात्मनेपदे सिद्धे तदर्थं ङित्करणेन ज्ञापितमिति शाब्दिकाः। गदाधरस्तु—'उत्पित्सति'—इति पठित्वा 'पद गतौ' इत्यस्य सन्नन्तस्य 'सनि मीमाघुरभलभशकपतपदाम्' ( पा. अ. ७।४।५४ ) इत्यादिना इसि कृते[5] 'पूर्ववत् सनः' ( पा. अ. १।३।६२ ) इत्यत्र भिन्नवाक्यतया परस्मैपदमिति व्याचष्टे इति ॥ ४-७ ॥

विमर्श—अपने कारणों से प्रकुपित हुए दोष जब रूप प्रकट होने से पूर्व सम्प्राप्ति की अवस्था में स्रोतों में अवरोध तथा जाठराग्नि का नाश कर देते हैं तब शरीर में आम सचय से भारीपन, बिना परिश्रम के थकावट की प्रतीति, अगमर्द तथा जृम्भा आदि लक्षण होते हैं स्थानसश्रय की अवस्था को

१. 'कफाच्चान्नाभिनन्दनम्' इत्यातङ्कदर्पणसंमतः पाठः।

२. 'द्वयोर्द्वयोस्तु रूपेण संसृष्टं द्वन्द्वजं विदुः' इति मुद्रितसुश्रुतपुस्तके पाठः। ३. 'विरुद्धमुखरसता इति क। ४. 'गौरवम्' इति क ख। ५. 'इस्भावे' इति पा०।

प्राप्त हुए दोष से ही पूर्वरूप की उत्पत्ति होती है। रोमाञ्च होना तथा शीत लगना ये दोनों सहचारी लक्षण हैं। परिसरीय केशिकाओं के संकोच के कारण ज्वर की प्रारम्भिक अवस्था में रोगी को शीत का अनुभव होता है एवं शीत से रक्षा करने के निमित्त रोंगटे भी स्वभावतः खडे हो जाते हैं। 'शीतवातातपादिषु' में आदि शब्द के पाठ से जल और अग्नि का तथा 'च' से अन्य ग्रन्थों में वर्णित लक्षणों का भी ग्रहण कर लेना चाहिये। क्योंकि चरक ने कहा है—

**आलस्यं नयने सास्रे जृम्भणं गौरवं क्लमः। ज्वलनातपवाय्वम्बुभक्तिद्वेषावनिश्चितौ॥**
**अविपाकास्यवैरस्ये हानिश्च बलवर्णयोः। शीलवैकृतमल्पं च ज्वरलक्षणमग्रजम्॥** (च.चि. ३)

**तम**—ज्वरकारी विषों का प्रभाव रक्त तथा मस्तिष्क पर भी होने लगता है अतः आंखों के आगे अंधेरा सा प्रतीत होता है।

**वातज्वरस्य लक्षणान्याह—**

**वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम्।**
**निद्रानाशः क्षवस्तम्भो[1] गात्राणां रौक्ष्यमेव च॥ ८॥**
**शिरोहृद्गात्ररुग्[2]वक्त्रवैरस्यं गाढविट्कता।**
**शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे॥ ९॥** (सु. उ. अ. ३९)

शरीर मे कपकपी, विषम वेग, कण्ठ और होंठों का सूखना, निद्रानाश, छींक का रुक जाना, शरीर में रूक्षता, सिर, हृदय प्रदेश तथा शरीर के अन्य अङ्गों में पीडा, मुख का स्वाद खराब होना, मल का सख्त होना, उदर में शूल तथा आध्मान की प्रवृत्ति एव जम्भाई अधिक आना ये वातिक ज्वर के लक्षण हैं॥ ८-९॥

**वातपित्तकफानां यथापूर्वं भूरिदारुणविकारकर्तृत्वेन प्राधान्यं; यदुक्तं चरके-'अशीतिर्वातविकाराश्चत्वारिंशत्पित्तविकारा विंशतिः श्लेष्मविकाराः' (च. सू. अ. २०) इति; तथा दारुणाश्च वातविकारा आक्षेपकपक्षाघातादयः; अतः प्राधान्यात् प्रथमं वातज्वरलक्षणमाह— वेपथुरित्यादि। एवमन्यत्रापि वातादिक्रमनिर्देशे वेदितव्यम्। विषमो वेग इति वेगो ज्वरस्य प्रवृत्तिर्वृद्धिर्वा, तस्य वैषम्यमनियतकालत्वम्, अङ्गेषु चौष्ण्याद्यनियतत्वम्। क्षवश्छिक्का, स्तम्भो गात्राणां जडिमा, रौक्ष्यमपि गात्राणामेवेति गदाधरादयो व्याचक्षते; तच्चानवधाना-द्व्याख्यातमिति लक्ष्यते; क्षवस्य स्तम्भः क्षवस्तम्भ इत्येकपदताऽत्र युज्यते। यदाह वाग्भटः- 'हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः। भ्रमः प्रलापो घर्मेच्छा विलापश्चानिलज्वरे'—(वा. नि. अ. २) इति। चरकेऽपि निदाने 'क्षवथूद्गारविनिग्रहः' (च. नि. अ. १) इति पठितम्। विनिग्रहशब्दस्तु तत्र तत्र निरोधार्थ एवाचार्येण निर्दिष्टः; यथा वातगुल्मनिदाने- 'रूक्षान्नपानं विषमातिमात्रं विचेष्टितं वेगविनिग्रहश्च' (च. चि. अ. ५) इति; यथाऽन्तर्वेगज्वरलक्षणे 'दोषवर्चोविनिग्रहः—' (च. चि अ. ३) इति। एतेन, ज्वरमुक्तिलक्षणे क्षवस्य पाठात् [3]कथमेतल्लक्षणमिति यदाशङ्कितं कार्तिककुण्डेन तदपि निरस्तम्। आध्मानं वायुना सवेदनमुदरपूर्णत्वम्। शिरोहृद्गात्ररुगित्यत्र गात्रग्रहणेन शिरोहृद्ग्रहणे सिद्धे तदभिधानं विशेषेण शिरसि हृदि च [4]वेदनार्थम्। एतानि रूपाणि प्रायोभावित्वेन निर्दिष्टानि**

---

१. 'क्षुतः स्तम्भ;' इति डल्हणसंमतः पाठः। २. 'शिरोरुक् गात्ररुक्' इति क पुस्तके पाठः; 'शिरसः पृथगुपादानमत्यर्थं शिरसि सा भवतीति ज्ञापनार्थम्, अन्यथा गात्ररुगित्यनेनैव तत्प्राप्तेः' इति सुश्रुतटीकायां डल्हणः। ३. 'कथमत्र लक्षणत्वम्' इति क ख। ४. 'शिरोरुग्गात्ररुगित्यत्र गात्रग्रहणेन शिरोग्रहणेन सिद्धे तदभिधानं विशेषेण शिरसि वेदनासूचनार्थम्' इति क।

सुश्रुतेन, तेन चकारेणान्यान्यपि चरकोक्तानि बोद्धव्यानि। तान्येव गद्येनोक्तानि सुखग्रहणार्थं श्लोकेन मया प्रदर्श्यन्ते—'भवन्ति विविधा वातवेदनाः पादसुप्तता। पिण्डिकोद्वेष्टनं कर्णस्वनो वक्त्रकषायता॥ ऊरुसादो हनुस्तम्भो विश्लेषः संधिजानुनोः'शुष्ककासो वमिर्लोमदन्तहर्षः श्रमभ्रमौ॥ अरुणं नेत्रमूत्रादि तृट्प्रलापोष्णकामिताः' इति॥ ८-९॥

विमर्श—ज्वर की प्रवृत्ति या वृद्धि को वेग कहते हैं। वातज्वर मे इन दोनों का समय निश्चित नहीं होता अतएव सुश्रुत ने इसे विषम वेग कहा है। चरक भी इसको विषमारम्भ विसर्गी मानते हैं। उक्त शब्द की व्याख्या में चक्रपाणि कहते हैं—'आरम्भः उत्पादः, विसर्गो मोक्षः, तौ विषमौ यस्य स विषमारम्भविसर्गी, अर्थात् ज्वर का वेग कभी सिर से प्रारम्भ होता है और कभी पीठ से या जङ्घा से तथा कभी तेज होता है और कभी मन्द। इसी प्रकार उसकी निवृत्ति का स्थान और काल भी अनियत ही होता है। वायु के प्राबल्य के कारण निद्रानाश (Insomnia) रहता है। कुछ लोग क्षव और स्तम्भ को पृथक् मानकर छींक की प्रवृत्ति एवं शरीर की जडता ऐसा अर्थ करते है। वस्तुतः यह ठीक नहीं, इनको एक मानकर छींक की रुकावट ही अर्थ करना चाहिये, क्योंकि वाग्भट ने भी छींक की रुकावट को ही वातज्वर का लक्षण माना है उसकी प्रवृत्ति को नहीं—

हर्षो र माङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः। भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे॥ (न. १)

इसके अतिरिक्त चरक ने भी 'विषमारम्भविसर्गित्वम्' इत्यादि लक्षणों में 'क्षवथूद्गारनिग्रहः' के द्वारा छींक के निग्रह या अवरोध का ही प्रतिपादन किया है। यद्यपि वेदना का अनुभव समस्त शरीर में होता है तथापि सिर एवं हृदयप्रदेश में इसकी विशेष प्रतीत होती है अतः उनका नामग्रहण विशेषरूप से किया गया है। वातज्वर का विशेष काल वर्षा ऋतु है। इन लक्षणों के अतिरिक्त कुछ दूसरे लक्षण कभी-कभी मिलते हैं और उनका उल्लेख भी चरक आदि ने किया है।

**पित्तज्वरलक्षणमाह—**

**वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः।**
**कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते॥ १०॥**
**प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा।**
**पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च॥ ११॥**

(सु. उ. अ. ३९)

पित्तज्वर में ज्वर का वेग तीक्ष्ण होता है, अतिसार, निद्रा की कमी तथा वमन होता है। कण्ठ, मुख, ओष्ठ तथा नासिका में पाक हो जाता है, पसीना भी आता है, रोगी प्रलाप करता है। एवं उसका मुंह कड़वा रहता है, रोगी को रूप आदि विषयों का ठीक २ ज्ञान नहीं रहता ( मूर्च्छा हो जाती है ), कभी २ मत्तता की प्रतीति होती है। प्यास अधिक लगती है। मल, मूत्र तथा नेत्रों का रंग पीला होता है एवं रोगी भ्रम से पीडित रहता है॥ १०-११॥

पित्तज्वरलक्षणमाह— वेगस्तीक्ष्ण इत्यादि। अतिसारः पित्तस्य सरत्वेन सद्रवा प्रवृत्तिर्न त्वतिसार एव, तस्य ज्वरोपद्रवत्वात्। निद्राल्पत्वं स्वल्पनिद्रात्वम्। उक्तं हि सुश्रुते-'निद्रानाशोऽनिलात् पित्तात्' ( सु. शा. अ. ४ ) इत्यादि। वमिः पित्तस्य कफस्थानगमनात्। स्वेदो घर्मागमनं, प्रायेण सामदोषेण स्रोतसां निरोधात् सर्वज्वरेषु घर्मनिरोधः, अत्र तु पित्तस्य तैक्ष्ण्याज्ज्वरप्रभावाद्वा स न भवति। प्रलापोऽसम्बद्धभाषणम्। वक्त्रकटुता मुखतिक्तत्वं चरके हि पैत्तिकनानात्मजचत्वारिंशद्विकारेषु तिक्तास्यतायाः पाठादनुभवाच्च। कार्तिकस्त्वरोचके 'कट्वम्लमुष्णं विरसं च पूति पित्तेन विद्याल्लवणं च वक्त्रम्' ( च. चि. अ. २६ )

इति [1]वचनं दृष्टान्तमुपन्यस्य कटुमुखत्वमपीच्छति । तन्न, तत्रापि सन्देहात् । यदुक्तं,—'कटुमुखत्वमप्येष्टव्यमिति । मूर्च्छेति मूर्च्छा रूपाद्यविज्ञानं, तमःप्रवेशो विस्मृतिरित्याहुः । मदो मत्तत्वमिव, यथा—पूगकोद्रवधत्तूरभक्षणादौ । भ्रमश्चक्रस्थितस्येव भ्रमद्वस्तुदर्शनमित्याहुः; अन्ये तु स्वदेहभ्रमणज्ञानम् । ननु, भ्रमस्याशीतिवातविकारपठितस्य वातनानात्मजत्वात् कथं पित्तविकारे पाठः ? उच्यते, 'न रोगोऽप्येकदोषजः' इति वचनात् पत्तिके वातानुबन्धाद् भ्रम इति जेज्जटः समाधानमुक्तवान् । अथवा दोषदूष्यसंमूर्च्छनप्रभावात् कारणादृष्टस्यापि[2] रूपस्य कार्य उपलम्भः; यथा—[3]अरूपवातारब्धातिसारादावविवारुणत्वं, हरिद्राचूर्णसंयोग[4] इव लौहित्यम् । यत्तूक्तं सुश्रुते—'रजःपित्तानिलाद् भ्रमः' (सु शा. अ. ४)—इति, तत्रापि वातानुगतपित्तजत्वमेव बोद्धव्यम्, अन्यथा भ्रमस्य वातिकनानात्मजत्वमेव न स्यादिति । अपरे तु पित्तदूषितनेत्रत्वेन विपर्यस्तज्ञानं भ्रमः, पीतः शङ्ख इत्यादिवत् । चकारः पूर्ववदनुक्तसमुच्चयार्थः । तद्यथा—तीव्रोष्मना रक्तकोठाः शीतेच्छताऽरुचिरिति ॥ ११-१२ ॥

**विमर्शः**—पित्तज्वर का वेग सम्पूर्ण शरीर में प्रायः एक साथ आता है । अतिसार से यहां अतिसरण नहीं अपितु द्रवयुक्त मल की प्रवृत्ति ही समझनी चाहिये, क्योंकि अतिसार वस्तुतः ज्वर का उपद्रव है । पित्त के द्रवत्व गुण के कारण मल पतला हो जाता है । सभी ज्वरों में पित्त की उपस्थिति रहती है । किन्तु पित्तज्वर में पित्त की प्रचुरता होने से वेग तीक्ष्ण स्वरूप का होता है । निद्राल्पता वायु के समान पित्त का भी कार्य है; क्योंकि सुश्रुत ने कहा है—**'निद्रानाशोऽनिलात् पित्तात्'** । वमन से पित्त का वमन समझना चाहिये; क्योंकि चरक ने पित्तज्वर के लक्षणों में **'पित्तच्छर्दनम्'** यह स्पष्ट रूप से कहा है । पित्त के कफस्थान आमाशय में आ जाने से पित्त ज्वर में वमन की प्रवृत्ति होती है । यद्यपि स्रोतों में अवरोध हो जाने से सभी ज्वरों में स्वेद-प्रवृत्ति का अवरोध रहता है तथापि पित्तज्वर उसका अपवाद है अतः इसमें स्वेद की प्रवृत्ति होती है । मूर्च्छा से रूप आदि विषयों का अज्ञान या विस्मृति समझनी चाहिये । भ्रम वातिक विकार होते हुए भी पित्तज्वर में वायु का अनुबन्ध होने के कारण अथवा विकृतिविषमसमवाय-जनित होता है । पित्तकृत ऊष्माजनित रूक्षता से वायु का अनुबन्ध होना स्वाभाविक भी है । पित्तज्वर विशेषतः शरदृतु में होता है ।

**कफज्वरलक्षणं निरूपयति—**

**स्तैमित्यं स्तिमितो वेग आलस्यं मधुरास्यता ।**
**शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥ १२ ॥**
**गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ।**
**[ स्रोतोरोधो रुगल्पत्वं प्रसेको लवणास्यता ।**
**नात्युष्णगात्रता च्छर्दिर्लालास्रावोऽविपाकता ॥ ]**
**प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥ १३ ॥**

कफज ज्वर में शरीर गीले कपड़े से ढका हुआ सा प्रतीत होता है, वेग मन्द रहता है, आलस्य तथा मुख का स्वाद मीठा होता है । मल और मूत्र का वर्ण सफेद होता है, शरीर में जकड़ाहट रहती है, अन्न में अरुचि, शरीर में भारीपन तथा शीत का अनुभव होता है । कफष्ठीवन या वमन करने की इच्छा रहती है, रोंगटे खडे रहते है और निद्रा बहुत आती है । सभी स्रोतों में अवरोध

१. 'पठित्वा, तदुपन्स्य' इति क ख । २. 'कारणदृष्टदोषस्यापि' इति क । ३. 'यथा' इति क ख पुस्तकयोर्न पठ्यते । ४. 'सयोगते यथा' इति क ख । ५. आतङ्कदर्पणसंमतोऽयं पाठः ।

रहता है, शरीर में पीड़ा कम होती है, लाला प्रसेक होता है, मुख का स्वाद नमकीन रहता है, शरीर अधिक गरम नहीं रहता, वमन, लालास्राव, अपचन, प्रतिश्याय, अरुचि तथा कास जैसे लक्षण होते हैं और आँखों का वर्ण सफेद रहता है ॥ १२-१३ ॥

कफज्वरलक्षणमाह—स्तैमित्यमित्यादि। स्तैमित्यमङ्गानामार्द्रपटावगुण्ठितत्वमिव। स्तिमितो वेगो मन्दो वेगः। आलस्यमिति 'समर्थस्याप्यनुत्साहः कर्मस्वालस्यमुच्यते' ( सु. शा. अ. ४ )-इत्यालस्यलक्षणमाहुः। स्तम्भः अङ्गस्तब्धता। तृप्तिः तृप्तस्येवान्नानभिलाषः। उत्क्लेदः कण्ठोपस्थितवमनत्वमिव। अरुचिरत्र सत्यप्यभिलाषे अभ्यवहारासामर्थ्यमिति भेदः। चकारः पूर्ववत्। तेन 'तथाऽङ्गे पिडकाः शीतं प्रसेकश्छर्दितन्द्रिके। हृदुपलेप उष्णाभिलाषिता वह्निमार्दवम्-' इति ॥ १२-१३ ॥

विमर्शः—इसका वेग भी सम्पूर्ण शरीर में एक साथ होता है। मुख का स्वाद आम या विदग्ध कफ के अनुसार मीठा या नमकीन हो सकता है। केशिकाओं के संकोच के कारण रोमांचितता तथा शीत का अनुभव होता है। वसन्त ऋतु इसके लिये अनुकूल काल है।

वातपित्तज्वरलक्षणमाह—

**तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा।**
**कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तमः ॥ १४ ॥**
**पूर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः।**

( सु. उ. तं. अ. ३९

प्यास, मूर्च्छा, भ्रम, दाह, निद्रानाश, सिर में पीडा, गले और मुख का सूखना, वमन, रोंगे खड़े होना, अरुचि, आँखों के आगे अन्धेरा-सा छाया रहना, सन्धियों में पीडा तथा जम्भाई की विशेषतायें वातपित्तज्वर के लक्षण हैं ॥ १४ ॥

वातपित्तज्वरलक्षणमाह—तृष्णेत्यादि। पर्वाणि भिद्यन्त इव[1] वेदना पर्वभेदः। एतानि च लिङ्गानि विकृतिविषमसमवायारब्धस्य बोद्धव्यानि। विकृतिविषमसमवायारब्धत्वं चैषां केवलवातिकपैत्तिकज्वरलक्षणानां मध्ये केषाञ्चिदेव नियमेन पाठात्तदतिरिक्तलक्षणपाठाच्च बोद्धव्यम्। यथा—अत्रैव वातपैत्तिकेऽरुचिरोमहर्षौ, वक्ष्यमाणवातश्लैष्मिके स्वेदः सन्तापश्च, एवं कफपैत्तिके अनवस्थितशीतदाहौ एवं सन्निपातजे सास्रकलुषादिनेत्रत्वशिरोलोठनादि। प्रकृतसमसमवायारब्धे तु वातजादिज्वरलिङ्गान्येव समस्तानि कतिपयानि वा भवन्ति। अतएव चिकित्सिते चरको विकृतिविषमसमवायारब्धानां द्वन्द्वसन्निपातज्वराणां लक्षणानि साक्षात् पठित्वा निदानस्थानोक्तवातादिज्वरलिङ्गातिदेशेन प्रकृतिसमसमवेतानां द्वन्द्वसन्निपातज्वराणां[2] लक्षणमुक्तवान्। यदाह—'निदाने त्रिविधा प्रोक्ता या पृथग्जज्वराकृतिः। संसर्गसन्निपातानां तथा चोक्तं स्वलक्षणम्' (च. चि. अ. ३ )-इति। एवं वक्ष्यमाणं द्वन्द्वसन्निपातलक्षणं व्याख्येयम्। प्रकृतिसमसमवायविकृतिविषमसमवाययोश्चायमर्थः—प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्यकारणभावसम्बन्धः प्रकृतिसमसमवायः, कारणानुरूपं कार्यमित्यर्थः, यथा—शुक्लतन्तुसमवायारब्धस्य पटस्य शुक्लत्वम्। विकृत्या हेतुभूतया विषमः कारणाननुरूपः समवायो विकृतिविषमसमवायः, यथा—हरिद्राचूर्णसंयोगजं लौहित्यमिति ॥ १४ ॥

१. 'इति पर्वभेदः पर्ववेदनाः' इति क ख। २. 'द्वन्द्वसन्निपातज्वराणाम्' इति क ख पुस्तकयोर्न पठ्यते।

**विमर्शः**—उपर्युक्त लक्षणों को विकृति-विषम समवायारब्ध समझना चाहिये क्योंकि इसमें वात तथा पित्त के कतिपय लक्षण होते है दूसरे नहीं तथा कुछ ऐसे लक्षण भी है जो न वातज्वर में हैं न पित्तज्वर में जैसे रोमहर्ष तथा अरुचि ये दोनों न तो वात के ही लक्षण है और न पित्त के। इसी प्रकार वक्ष्यमाण वातश्लैष्मिक ज्वर में स्वेदप्रवृत्ति एवं सन्ताप, पित्तकफ ज्वर मे अनवस्थितशीतता एवं दाह, सन्निपातिक ज्वर में आंखों में मलिनता, अश्रुपूर्णता तथा सिर को इधर-उधर फेंकना आदि। ये सभी लक्षण अपने निदान के कारण प्रकुपित समवेत दोष के कारण उत्पन्न हुए प्रतीत नहीं होते अतः उन्हें विकृतिविषमसमवायजन्य लक्षण कहा जाता है। प्रकृतिसमसमवायारब्ध द्वन्द्वज ज्वर में वातादिज्वर के ही सम्पूर्ण या असम्पूर्ण लक्षण मिले होते है। इसी आशय से महर्षि चरक ने चिकित्सा स्थान में विकृतिविषमसमवायारब्ध द्वन्द्वज तथा सन्निपातज ज्वर के लक्षणों का वर्णन करके निदानस्थान में वर्णित वात-कफ आदि के लक्षणों के अनुसार प्रकृतिसमसमवायारब्ध द्वन्द्वज तथा सन्निपातज ज्वर के लक्षणों का भी निर्देश पृथक् भी किया है—**'निदाने त्रिविधा प्रोक्ता या पृथग्ज्वराकृतिः। संसर्गसन्निपातानां तथा चोक्तं स्वलक्षणम्'** ॥ अर्थात् निदान स्थान में वातिक आदि तीन प्रकार के ज्वरों के पृथक्-पृथक् जो लक्षण कहे है उन्ही लक्षणों के सयोग या ससर्ग के अनुसार संसर्गज ( द्वन्द्वज ) तथा सन्निपातज ज्वरों के लक्षण समझने चाहिये। प्रकृतिसमसमवाय तथा विकृतविषमसमवाय का अर्थ निम्न प्रकार से स्पष्ट किया जा सकता है—**'प्रकृत्या हेतुभूतया समः कारणानुरूपः समवायः कार्यकारणभावसम्बन्धः प्रकृतिसमसमवायः'** अर्थात् रोग की प्रकृति अर्थात् निदान या कारण के समान समवाय या कार्यकारणभावसम्बन्ध का होना प्रकृतिसमसमवाय कहलाता है। यथा सफेद तन्तुओं से बना हुआ कपड़ा सफेद ही होता है। कफपित्तज ज्वर में लिप्ततिक्तास्यता लक्षण इसका ही उदाहरण है। इस प्रकार कारण के अनुरूप कार्य की प्रवृत्ति ही प्रकृतिसमसमवाय है।

विकृतिविषमसमवाय **'विकृत्या हेतुभूतया विषमः कारणाननुरूपः समवायो विकृतिविषमसमवायः'** अर्थात् विकृति के कारण विषम अर्थात् कारण के विपरीत समवाय या कार्यकारणभाव सम्बन्ध को विकृतिविषमसमवाय कहते है। यथा पीले रगवाली हल्दी और सफेद चूने के संयोग से विषम लाल रग की उत्पत्ति होती है, इसी तरह वातपित्तज्वर के लक्षणों में रोमहर्ष और अरुचि भी वात या पित्त के स्वतन्त्र लक्षण न होते हुए भी इस अवस्था मे मिलते है अतः इन्हें **'विकृतिविषमसमवायारब्ध'** कहा जाता है। इस प्रकार कारण के अनुरूप कार्य न होना ही **'विकृतिविषमसमवाय'** कहलाता है।

**वातश्लेष्मज्वरलक्षणमाह—**

**स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥ १५ ॥**
**शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम् ।**
**सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥ १६ ॥**

( सु. उ. तं अ. ३९ )

वातश्लेष्मज्वर में शरीर गीले कपड़े से भीगा-सा रहता है, सन्धियों में पीडा होती है, निद्रा अधिक आती है और शरीर भारी रहता है। शिरःशूल, प्रतिश्याय, खाँसी, स्वेद की अधिकता, शरीर मे सन्ताप तथा ज्वर का मध्य वेग रहता है ॥ १५–१६ ॥

**वातश्लेष्मज्वरलक्षणमाह—स्तैमित्यमित्यादि। स्वेदाप्रवर्तनं स्वेदस्य आ समन्तादकारणेन प्रवर्तनं विकृतविषमसमवायारब्धत्वादिति** कार्तिकः। **युक्तं चैतत्; यदाह हारीतः—**

'शिरोग्रहः स्वेदभवो ज्वरस्य कासश्च लिङ्गं कफवातजस्य'—इति स्वेदभवः स्वेदोत्पत्तिः। मध्यवेगो नातितीक्ष्णो नातिमृदुरिति ॥ १५-१६ ॥

विमर्शः—'स्वेदस्य आ समन्तात् प्रवृत्तिः स्वेदाप्रवृत्तिः—स्वेद की अत्यधिकता ही इसका अर्थ है। क्योंकि हारीत ने भी वातश्लेष्मज्वर में स्वेदप्रवृत्ति का वर्णन किया है। स्वतन्त्र वात या कफज्वर में यह स्वेदप्रवृत्ति-लक्षण नहीं मिलता। अतः इसे विकृतिविषमसमवायारब्ध कहते हैं।

श्लेष्मपित्तज्वरलक्षणमाह—

लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा।
मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥ १७ ॥

श्लेष्मपित्तज्वरलक्षणमाह—लिप्तेत्यादि। श्लेष्मणा लिप्तं पित्तेन तिक्तं च आस्यं मुखं यस्य, तस्य भावो लिप्ततिक्तास्यता। तन्द्रा निद्रावत्क्लान्तिः[1]। मोहो मूर्च्छा। एतानि लिङ्गानि प्रायोभावित्वेन निर्दिष्टानि, [2]तेनान्यान्यपि चरकोक्तानि बोद्धव्यानि। यथा—तथा स्तम्भश्च संस्वेदः कफपित्तप्रवर्तनम्' इति ॥ १७ ॥

विमर्शः—उक्त लक्षण ही अधिकतर पाये जाते हैं अतः माधव ने इन्हीं का वर्णन किया है। इनके अतिरिक्त चरकोक्त स्वेद, जकड़ाहट तथा श्लेष्मा और पित्त का निकलना एवं अन्य तन्त्रान्तरीय लक्षणों का भी ग्रहण कर लेना चाहिए।

साम्निपातिकज्वरलक्षणं व्याचष्टे—

क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ १८ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥ १९ ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम्।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ २० ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ २१ ॥
कृशत्वं नातिगात्राणां प्रततं कण्ठकूजनम्।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ २२ ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।
चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ २३ ॥

( च. चि. अ. ३ )

सन्निपातज्वर में क्षण में दाह और क्षण में शीत का अनुभव होता है, अस्थि, सन्धि तथा सिरमें

१. 'लोचनक्लान्तिः' इति क ख। २. 'लिखितानि' इति क ख।

विशेष वेदना होती है, नेत्र आंसुओं से भरे रहते हैं, उनका रग मैला और लाल रहता है और वे विस्फारित अथवा अन्दर को प्रविष्ट रहते हैं। कानों में अकारण ही सन-सन शब्द सुनाई पड़ता है और उनमें दर्द भी रहता है, गले में यवशूकों से भरे रहने के समान अनुभव होता है; तन्द्रा, मूर्च्छा, प्रलाप, कास, श्वास, अरुचि तथा भ्रम होते है, जिह्वा झुलसी हुई सी कृष्णवर्ण की एवं स्पर्श में ( गाय की जीभ के समान ) खुरदरी होती है, सम्पूर्ण अंग शिथिल रहते है, थूक में कफ के साथ रक्त या पित्त भी निकलता है, रोगी सिर को इधर-उधर घुमाता रहता है, प्यास, निद्रानाश, एव हृदय-प्रदेश में पीडा रहती है तथा स्वेद, मूत्र और मल देर से या अल्पमात्रा में निकलते है। शरीर अत्यधिक कृश नहीं होता, कण्ठ में निरन्तर ( कबूतरों के शब्द के समान ) घुर्घुराहट होती रहती है, शरीर पर सांवले या लाल रंग के ददोडे या चकत्ते पड़ जाने है, रोगी बोलने में असमर्थ रहता है, मुख, नासा, कान तथा गुदा आदि स्रोतों में पाक हो जाता है, पेट भारी रहता है तथा दोषों का परिपाक विलम्ब से होता है ॥ १८–२३ ॥

सान्निपातिकज्वरलक्षणमाह–क्षणे दाह इत्यादि। रुजा शूलम्, अस्थ्यादिभिः संबध्यते। सास्रावे साश्रुणी। कलुषे आविलवर्णे। निर्गता भुग्नता संकुचितता ययोस्ते निर्भुग्ने, 'विस्फारिते इत्यर्थः' इति जेज्जटः, 'अन्तः प्रविष्टे'–इत्यन्ये, 'अतिकुटिले'–इति चक्रः। शूकैः शूकशिम्बि(म्बा)धान्यादेः। परिदग्धा दग्धवत्कृष्णवर्णा। खरस्पर्शा खरो गोजिह्वावत् स्पर्शो यस्यां सा तथा। स्रस्ताङ्गता निःसहावयवता। ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन स्वल्पोद्गिरणम्। शिरसो लोठनमितस्ततश्चालनम्। कृशत्वं नातिगात्राणां दोषपूर्णत्वेन। प्रततं निरन्तरम्। कोठो भालुकितन्त्रे पठितः। तद्यथा- 'वरटोदष्टसंकाशः कण्डूमांल्लोहितोऽस्रकफपित्तात्। क्षणिकोत्पादविनाशः कोष्ठ इति निगद्यते तज्ज्ञैः'–इति। मूकत्वं मन्दवचनता, अवचनता वा। गुरुत्वमुदरस्य च उदरगौरवम्, चिरात् पाकश्च दोषाणामिति अतिसामतारब्धत्वेन। चकारादन्यान्यपि बोद्धव्यानि। यदाह वाग्भटः–'तद्वच्छीत महानिद्रा दिवा जागरणं निशि। सदा वा नैव वा निद्रा महान् स्वेदोऽथवा न वा ॥ गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम्—' ( वा. नि. अ २ ) इति। एतच्च लक्षणं त्रयोदशसन्निपातेषु मध्ये स्वमानाद् वृद्धैर्दोषैस्तुल्यैरारब्धस्य ज्वरस्य चरकेण पठितं; द्व्युल्बणादीनां च द्वादशानां लक्षणं[1] तत्रैव द्रष्टव्यम्। तथा च काश्मीरपाठेः चरकः—'भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक्। वातपित्तोल्बणे विद्याल्लिङ्गं मन्दकफे ज्वरे ॥ शैत्य कासोऽरुचिस्तन्द्रापिपासादाह[2]हृद्व्यथाः। वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः। छर्दिः शैत्यं मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना। मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे ॥ सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः। वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता ॥ रक्तविण्मूत्रता दाहः स्वेदस्तृष्णा बलक्षयः। मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि ॥ आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः। कफोल्बणं सन्निपातं तन्द्राकासेन चादिशेत् ॥ प्रतिश्या छर्दिरालस्यं तन्द्राऽरुच्यग्निमार्दवम्। हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम् ॥ हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः। हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम् ॥ शिरोरुग्वेपथुश्वासप्रलापच्छर्द्यरोचकाः। हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥ शीतता गौरवं तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक्। हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥ [3]वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः। कफहीने वातमध्ये लिङ्ग पित्ताधिके विदुः ॥ श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक्। कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम्' ( च. चि. अ. ३ ) इति। विकृतौ नियमो नास्ति; तेन विकृति-

१. 'लक्षणं बोद्धव्यम्' इति क ख। २. 'दाहरुक् तथा' इति क ख। ३. 'पर्वभेदोऽग्निदौर्बल्यम्' इति क ख।

विषमसमवायादनेकप्रकारा भवन्ति[1]। अतः सुश्रुतेनाप्यन्यादृशं सन्निपातलक्षणं पठितम्- 'नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतप्रभः। खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः॥ सास्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः। श्वसन्निपतितः शेते प्रलापोपद्रवान्वितः॥ अभिन्यासं तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः' ( सु. उ. अ. ३९ ) इति। तथा भालुकितन्त्रे द्व्युल्बणैकोल्बणादिलक्षणमन्यथा पठितम्।[2] तद्यथा-'वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति। तस्य ज्वरोऽङ्गमर्दस्तृट्तालुशोषप्रमीलकाः॥ आध्मानतन्द्रारुचयः श्वासकासभ्रमश्रमाः। पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति॥ अन्तर्दाहो बहिः शीतं तस्य तन्द्रा च बाधते। तुद्यते दक्षिणं पार्श्वमुरःशीर्षगलग्रहाः॥ निष्ठीवेत् कफपित्तं च तृष्णा कण्डूश्च जायते। विड्भेदश्वासहिक्काश्च बाधन्ते सप्रमीलकाः॥ [3]विभुफल्गू च तौ नाम्ना सन्निपातावुदाहृतौ। श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति॥ तस्य शीतज्वरो निद्रा क्षुत्तृष्णा पार्श्वनिग्रहः। शिरोगौरवमालस्यमन्यास्तम्भप्रमीलकाः॥ उदरं दह्यते चास्य कटिर्वस्तिश्च दूयते। सन्निपातः स विज्ञेयो मकरीति सुदारुणः॥ वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति। तस्य [4]तृष्णाज्वरग्लानिपार्श्वरुग्दृष्टिसंक्षयाः॥ पिण्डिकोद्वेष्टनं दाह ऊरुसादो बलक्षयः। सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः॥ निर्भिद्यते गुदं चास्य वस्तिश्च परिकृत्यते। आयम्यते भिद्यते च हिक्कते विलपत्यपि॥ मूर्च्छते स्फायते रौति नाम्ना विस्फुरकः स्मृतः। पित्तोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति॥ तस्य दाहो ज्वरो घोरो बहिरन्तश्च वर्धते। शीतं च सेवमानस्य कुप्यतः कफमारुतौ॥ ततश्चैनं प्रधावन्ते हिक्काश्वासप्रमीलकाः। विसूचिका पर्वभेदः प्रलापो गौरवं क्लमः। नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्धते। स्विद्यमानस्य रक्तं च स्रोतोभ्य सम्प्रवर्तते॥ शूलेन पीड्यमानस्य तृष्णा दाहश्च वर्धते। असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते॥ नहि जीवत्यहोरात्रमेतेनाविष्टविग्रहः। कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति॥ तस्य शीतज्वरस्वप्नगौरवालस्यतन्द्रयः। छर्दिमूर्च्छातृषादाहतृप्त्यरोचकहृद्ग्रहाः॥ ष्ठीवनं मुखमाधुर्यं श्रोत्रवाग्दृष्टिनिग्रहः। श्लेष्मणो निग्रहं चास्य यदा प्रकुरुते भिषक्॥ तदा तस्य भृशं पित्तं कुर्यात् सोपद्रवं ज्वरम्। निगृहीते तु पित्ते च भृशं वायुः प्रकुप्यते॥ निराहारस्य सोऽत्यर्थं मेदोमज्जास्थि [5]बाधते। अथात्र स्नाति भुङ्क्ते वा त्रिरात्रं न हि जीवति॥ मेदोगतः सन्निपात [6]कफ्फणः स उदाहृतः। कामान्मोहाच्च लोभाच्च भयाच्चायं प्रपद्यते॥ मध्यहीनाधिकैर्दोषैः सन्निपातो यदा भवेत्। तस्य रोगास्त एवोक्ताः प्रायो दोषबलाश्रयाः' इत्यादि। ननु, वातादयः परस्परं विरुद्धगुणाः विरुद्धगुणानां च संभूयैककार्यारम्भकत्वं नोपपद्यते, परस्परोपघातात्तुहिनदहनयोरिव; तत् कथं सान्निपातिकविकारोत्पत्तिरिति[7]। अत्र समाधानमुक्तं दृढबलेन; यथा-'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वाद्घोरं विषमहीनिव'इति ( च. चि. अ. २६ )। एतच्चान्ये

१. अस्याग्रे क पुस्तके प्रकृतिसमवाये तु सन्निपाते पृथग्वातादिज्वरलक्षणं ज्ञेयं; हीनमध्याधिकक्रमेण सन्निपाता एव षट् द्व्युल्बणत्वेन त्रयः, एकोल्बणत्वेन त्रयः, समत्वेनैकः, एवं त्रयोदश प्रकृतौ' इत्यधिकः पाठ उपलभ्यते।

२. अस्याग्रे क पुस्तके 'वातः पित्ताधिकोऽयं प्रथममुपचितो हन्ति वह्निं शरीरे-श्लेष्मत्वं याति भुक्तं सकलमपि ततोऽसौ कफो वायुदुष्टः। स्रोतांस्यापूर्य रुन्ध्यादनिलमथ मरुत् कोपयेत् पित्तमन्तः सम्मूर्च्छयान्योन्यमेते प्रबलमिति नृणां कुर्वते सन्निपातम्' इत्यधिकः पाठ उपलभ्यते। ३ 'विभुः फल्गुश्च' इति क ख। ४ ख पुस्तके तृष्णेत्यत्र चिन्तेति पाठः। ५ 'धावति' इति क ख। ६ 'कम्फण' इति क ख।

७ अस्याग्रे क पुस्तके तद्यथा—वातस्य शीतरूक्षादिगुणयुक्तस्य उष्णस्निग्धादिगुणयुक्तेन पित्तेन, तथा कफस्य गौरवस्निग्धात्मकस्योभाभ्यां विरोधः। 'तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः। पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम्। स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः॥

दूषयन्ति-सहजत्वादित्यनैकान्तिकं, यतः सहजानपि धातून् दोषा उपघ्नन्ति; सात्म्यत्वादित्यपि साध्याविशिष्टं, यतः सात्म्यत्वमबाधकत्वं, तदेव च दोषाणामिह साध्यम् । अत्रोच्यते-दोषा नोपघ्नन्तीति कोऽयमनुपघातः साध्यते ? विकृतेरकारकत्वं वा, अविनाशकत्वं वा ? नाद्यः, दोषाणां परस्परं विकृतिकर्तृत्वात् । यथोक्तं चरके-त्रिदोषयेद्बस्तिगतं सशुक्रं मूत्रं

---

कट्वम्ललवणं पित्तं स्वाद्वम्ललवणं कफः । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः' इति । किंच, मिथ्याहारविहाराभ्यां दोषा युगपदुत्पद्यन्ते आहोस्वित्कालव्यधानेन ? आद्ये समबलत्वेन तारतम्येन वा ? नाद्यः सर्वेषां समबलत्वेन परस्परघातकानां युगपदुत्पत्तिर्न स्यात् । अथ भिन्नाश्रयतया साऽस्तु; तदपि न, कुपितानां सर्वदेहव्यापित्वेन परस्परसम्बन्धात् । यदुक्तं 'व्याप्नोति सहसा देहमापादतलमस्तकम्' इति । किंच ज्वरोत्पत्तौ तावत् कुपितानामामाशयगतानां रसदूषकाणां ज्वरोत्पादकत्वं, तन्मिलितानामेव स्याद्यथा दुष्टेनेति । न द्वितीयः पूर्वदोषाधिकत्वात्* । किंच तारतम्येनोत्पत्तौ मूषकमार्जारवद्विरोधे प्रागेव तेन प्रबलेन दुर्बलाघातः सुकरः, दृश्यते च मात्स्यो न्यायः । अथ युगपदुत्पादका आहारादयो न भवन्ति; तत्र युगपदुत्पादकद्रव्यमेकमनेकं वा ? तस्य पाञ्चभौतिकत्वेन विरुद्धगुणाधिकार(करण)स्य त्रिदोषोत्पादकत्वं न स्यात् । अस्तु वाऽविचारितरमणीयम् । एकमेवाभ्यवह्रियत इति कथम् ? अस्तु वा साधकत्वेन सहकारिणि द्रव्याभ्यवहारे तस्य विरुद्धगुणवत्त्वेन दोषान्तरघातकत्वेनानुत्पत्तिः तदवस्थतयैव जायमानः केवलैकदोषजो न संसर्गसन्निपातजो ज्वर इति । अथादृष्टाधीनत्वेन सहकारिणो भावे ( सम्भवे ) एकाभ्यवहारे सन्निपातः, तर्हि सर्वेषां समबलत्वेनेत्यत्रोक्तदोषः स्यात् । अथानेकद्रव्याणामभ्यवहारे त्रिदोषप्रकोपणं न सम्भवति । तत्र तुल्यानामेवाभ्यवहारः कथं ? यतो भिन्नरुचित्वात् । यथारुच्यभ्यवहारे तारतम्यसम्बन्धात् । तारतम्येनैव भवति प्रकोपो न युगपदिति प्रतिज्ञाहानिः । अत्राप्यदृष्टाधीनत्वात्तुल्याभ्यवहारे प्रतिघातकत्वाभावेऽपि यौगपद्यं तर्हि स दोषः । अथ कालव्यवधानेन, तत्र पूर्वस्मादुत्तरस्य भिन्नः कालो भवेत् समबलो वा न्यूनाधिकबलो वा ? नाद्यः, उपसञ्जातविरोधित्वेनोत्पत्तुमेव न शक्नोति । न द्वितीयः, न्यूनबलत्वेन पूर्वप्रबलेनैव विनाशितत्वात्, अकिञ्चित्करत्वाच्च । न तृतीयः, विचारासहत्वात् । तत्र वक्तव्यमधिकबलत्वमुत्पत्तेः पूर्वं पश्चाद्वा ? नाद्यः, अनुत्पन्नस्याधिक्याभावात् । अधिकत्वं धर्मः, स तु सति धर्मिणि चिन्त्यः । अथ पश्चात् ? तन्न, उत्पत्त्यधिके अधिकेन घातस्योपसञ्जातविरोधिन उत्पत्तिरेव न, कुतोऽधिकत्वम् । अत्राप्यधिकत्वं न सम्भवति । तस्माद्विरुद्धगुणानां संभूय कर्तृत्वं घटघटाभावयोरिव घटघटप्रध्वंसयोरिव सहावस्थायित्वं नास्ति दहनतुहिनवत् । अत्रोच्यते-सर्वे विकल्पा अनङ्गीकारपाशहताः सन्निपातस्तु स्यादेव, मिथ्याहारादिना कुपिता दोषा युगपत् कालव्यवधानेन वा समबलत्वेन तारतम्येन वा परस्परविरुद्धा अपि स्वस्थानादामाशयमागत्य रसं दूषयित्वा द्वन्द्वसन्निपातोत्पादका भवन्ति, उक्तं च-मिथ्याहारेत्यादि । कालव्यवधानेनोत्पन्नानामपि कालान्तरेण यौगपद्यमेव भवतीति न कदा(का)चिदनुपपत्तिः ननु, कथमादिपश्चाद्भावेनोत्पन्नानां यौगपद्यमिति चेत् ? तन्न, दोषाद्दोषान्तरोत्पत्तेः । तदुक्तं—'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत् । एकः प्रशमितो दोषः सर्वान् दोषान्निवारयेत्' इति । तथाच चरकः-'कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति-' इति । अत्र रुजाकरत्वाद्दोषोऽपि रोग इति टीकाकृतो व्याचक्षते, 'विकृतो दोषो रोग' इति समुदायसमुदायिनोरभेदवादिना मतं पूर्वमेवोक्तम् । अन्यच्च तथा-'विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च' इति । विकृतानां घातकत्वं रोगरूपेणैव भवति, या विकृतिः स एव रोग इति न दोषरोगयोर्भेदः । अस्तु वा भेदः, मिलितैर्दोषै रोगः क्रियत इति । कथञ्चिदपि एकानेकद्रव्याभ्यवहारे सहकारिणि दैवात्त्रयाणां प्रकोपो

---

* 'पूर्वदोषोऽधिकः स्यात्' इति वा पाठः

सपित्तं पवनः कफं वा। यदा तदाऽस्मर्युपजायते तु क्रमेण पित्तेष्विव[1] रोचना गोः' इति ( च. चि. अ. २६ ) तथा चोक्तं वाग्भटेन-'सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते॥ सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च। तदा स्तम्नाति तेनोरू स्तब्धौ शीतावचेतनौ' ( वा. नि. अ. १५ ) इति[2]। अविनाशकत्वं तु विद्यत एव, धातुदोषयोः परस्परं च दोषाणां सर्वथोच्छेदप्रतिपादकागमाभावात्, मरणप्रसङ्गाच्च; दोषाणामपि देहधारकत्वात्; तस्मात् सर्वथोच्छेदनिरासाभिप्रायेणैव दृढबलवचनमिह द्रष्टव्यं; ततः कुतोऽनैकान्तिकता। न चैवं सति विषस्य विषादकर्तृत्वेन दृष्टान्तविफलत्वं, विषस्य विषादादवान्तरव्यापारस्य[3] प्राणविनाशकत्वात्; न च सर्वात्मना दृष्टान्तो भवतीति। सात्म्यत्वादित्यस्यायमर्थः-सात्म्यत्वेन प्रतीयमानत्वात्। दोषाः परस्परं नोपघ्नन्ति, अनुपघातकत्वेन प्रतीयमानत्वात्; यद्यथा प्रतीयते तत्तथा निर्दिश्यते, यथाऽग्निकार्यो धूमोऽग्निकार्यत्वेनेति तत् कुतः साध्याविशिष्टत्वमिति। चक्रस्तु सहजसात्म्यत्वादित्येकमेव हेतुं व्याख्यातवान्-सहजं स्वाभाविकं दोषाणां सात्म्यत्वमिति। दृढबलोक्तहेतुद्वयास्वरसेन गयदासस्तु हेत्वन्तरमुक्तवान्, 'दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके। विरुद्धैः स्वगुणैः कश्चिन्नोपघातः परस्परम्' इति संक्षेपः॥ १८-२३॥

**विमर्शः**—सन्निपातज्वर का प्रभाव सब धातुओं एवं अंगों पर पड़ता है। केशिकाओं का मार्ग अवरुद्ध होने से मस्तिष्क में रक्त पर्याप्त मात्रा में नहीं पहुँच पाता अतः वह स्थान विकृत हो जाता है जिससे रोगी असम्बद्ध प्रलाप करने लगता है। इसी प्रकार कभी-कभी मूर्छा भी आ जाती है। श्वासनलिकाओं में कफ की उपस्थिति के कारण खांसी तथा अवरोध के फलस्वरूप श्वास की प्रवृत्ति भी पाई जाती है। जिह्वा पर अंकुर से निकल आते हैं और कभी-कभी सम्पूर्ण मुख और गला अंकुरवत् रचनाओं से परिपूर्ण हो जाता है, इससे रोगी को मुख द्वारा कोई वस्तु ग्रहण करने तथा बोलने में भी कष्ट होता है। वाणीकेन्द्र पर प्रभाव होने से भी मन्दवचनता या मूकता होती है। कफावरुद्ध कण्ठ से कपोतकूजनवत् घुरघुर शब्द निकलता है।

भालुकितन्त्रकार ने वरटी ( ततैया ) के द्वारा काटने से उत्पन्न ददोड़े के समान कोठ को माना है—

**वरटीदष्टसंकाशः कण्डूमांल्लोहितोऽस्रकफपित्तात्।**
**क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः॥**

कोठ की उत्पत्ति रक्त, कफ तथा पित्त के मिश्रण से होती है। इसमें खुजली की विशेषता रहती है और अल्पकाल में ही उत्पन्न होकर विनष्ट भी हो जाती है। प्रबल सामता होने के

---

भवत्येव। उक्तं च-'दृष्टापराधजः कश्चित् कश्चित्पूर्वापराधजः। तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः' इति, तथा-'पित्तक्षोभे तिलाभ्यङ्गो रात्रौ च दधिभोजनम्। अनिद्रा मैथुनं यस्य सन्निपातो भवेद् ध्रुवम्' इति। ननु दोषाणां बाध्यबाधकभावेनादिपश्चाद्भावेनोत्पत्तिर्दोषाद्दोषान्तरोत्पत्तिर्वा न सम्भवतीत्यनुपदमेवोक्तं' इत्यधिकः पाठ उपलभ्यते।

१, पित्तादिव' इति कः। २ अस्याग्रे कः पुस्तके—'न द्वितीयः, दोषाद्दोषान्तरोत्पत्तिर्दर्शितैवानुपदम् 'एकः प्रकुपितो दोष' इत्यादिना, अतो दोषस्य देशान्तरबिल(ग)ति (१) कारणत्वादन्य एवानुपघातः' इत्यधिकः पाठ उपलभ्यते। ३ अस्याग्रे क. पुस्तके 'अतः सात्म्यत्वात् सहजत्वादविरोधित्वमिति यदुक्तमनैकान्तिकत्वं तन्न, उपघातशब्दस्य न्यूनाधिकपर्यायविरोधित्वात्। आहारं दोषा उपघ्नन्तीति दूष्यरसधातुदूषकत्वं दोषाणां; तच्च रसदूष्यप्रकृत्यन्यथापादकत्वं नान्यदिति कुतो नाशः। साध्याविशिष्टता तु निरस्ता स्पष्टतरा' इत्यधिकः पाठ उपलभ्यते। ४. 'विषादादवान्तरव्यापारस्य' इति क-

कारण दोषों का परिपाक विलम्ब से होता है। इन लक्षणों के अतिरिक्त वाग्भट ने कुछ विशेष लक्षणों का भी वर्णन किया है उनको भी सुखस्मरणार्थ नीचे उद्धृत करते है—

**'तद्वच्छीतं महानिद्रा दिवा जागरणं निशि। सदा वा नैव वा निद्रा महान् स्वेदोऽथवा न वा। गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम्'** ॥ ( वा० नि० अ० २ )

दिन मे निद्रा की अधिकता एवं रात्रि में निद्रानाश यह सन्निपातज्वर का विशिष्ट लक्षण है। कफोल्बण सन्निपात में निद्रा सदा बनी रहती है जब कि वातपित्तोल्बण सन्निपात में उसका सर्वथा अभाव रहता है। इसी प्रकार पित्तोल्बण सन्निपात में स्वेद का आधिक्य एव श्लेष्मोल्बण में स्वेद का अभाव रहता है। गीत, नृत्य आदि लक्षण तीव्रतापजन्य की विकृति एवं वाताधिक्य के द्योतक हैं।

चरक आदि आचार्यों ने तेरह प्रकार का सन्निपात माना है—इस प्रकार सन्निपातज्वर भी तेरह प्रकार का होता है। माधव ने हीन-मध्य आदि बारह भेदों का निरूपण न करके केवल समान मात्रा में अपने प्रमाण से बढ़े हुए तीनों दोषों से उत्पन्न ज्वर के लक्षणों का ही वर्णन किया है। प्रसग से सन्निपात के शेष बारह भेदों का वर्णन भी चरक के अनुसार आगे किया जाता है। ( मूलश्लोक मधुकोश में देखिए )—

वातपित्तोल्बण तथा हीनकफ सन्निपात ज्वर में प्यास, दाह, शरीरगौरव तथा शिर में बहुत वेदना होती है। वातकफोल्बण तथा हीनपित्त सन्निपातज्वर में शीत, खांसी, अरुचि, तन्द्रा, प्यास, दाह तथा हृदय में पीडा होती है।

पित्तकफाधिक तथा हीनवात सन्निपातज्वर में वमन, बार-बार शीत और दाह की अनुभूति, प्यास, मूर्च्छा तथा अस्थियों में वेदना होती है।

वाताधिक हीनपित्त और हीनकफ सन्निपातज्वर में सन्धि, अस्थि तथा सिर में शूल होता है। रोगी प्रलाप करता है। शरीर में भारीपन, भ्रम, प्यास होते हैं तथा गले और मुख सूखे रहते हैं।

पित्ताधिक हीनवातकफ सन्निपातज्वर मे मल और मूत्र का रग लाल होता है, दाह, प्यास, बलहानि तथा मूर्च्छा ये लक्षण होते है। कफाधिक हीनवातपित्त सन्निपातज्वर में अरुचि, मिचली, जलन, वमन, बेचैनी, भ्रम, तन्द्रा तथा खाँसी ये लक्षण होते है।

हीनवात, मध्यपित्त और श्लेष्माधिक सन्निपातज्वर में प्रतिश्याय, वमन, आलस्य, तन्द्रा, अरुचि तथा अग्निमान्द्य ये लक्षण होते हैं।

हीनवात, मध्यकफ तथा पित्ताधिक सन्निपातज्वर में मूत्र व नेत्र का वर्ण हल्दी जैसा रहता हैं, जलन, प्यास, भ्रम तथा अरुचि ये लक्षण होते हैं।

हीनपित्त, मध्यकफ तथा वाताधिक सन्निपातज्वर में सिर में पीडा, कम्पन, श्वास, प्रलाप, वमन तथा अरुचि ये लक्षण होते है। हीनपित्त, मध्यवात तथा कफाधिक सन्निपातज्वर में ठण्डक, भारीपन, तन्द्रा, प्रलाप, हड्डी तथा सिर में तीव्र पीड़ा होती है।

हीनकफ, मध्यवात तथा पित्ताधिक सन्निपातज्वर मे पतले दस्त, अग्निमान्द्य, प्यास, दाह, अरुचि तथा भ्रम ये लक्षण होते हैं।

हीनकफ, मध्यपित्त तथा वाताधिक सन्निपातज्वर में श्वास, खांसी, जुकाम, मुख का सूखना तथा पसलियों में पीडा ये लक्षण होते हैं।

वस्तुतः विकृति का कोई नियम नहीं होता इस प्रकार विकृतिविषमसमवाय के अनेक भेद हो सकते हैं अत एव सुश्रुत ने अभिन्यास नामक भिन्न ही सन्निपात का वर्णन किया है—

**नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तप्रेक्षी हतप्रभः। खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः॥**

**साश्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः। श्वसन्निपतितः शेते प्रलापोपद्रवान्वितः॥
अभिन्यासं तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः॥**

भालुकितन्त्र में द्व्युल्बण, एकोल्बण आदि सन्निपात के लक्षण भिन्न प्रकार से ही लिखे गये हैं और उनमें से प्रत्येक के लिये स्वतन्त्र नाम भी दिये गये हैं यथा (मूल श्लोक मधुकोष में देखें)—

१. वातोल्बण या विस्फुरक सन्निपात के लक्षण—वातोल्बण सन्निपात में प्यास, ज्वर, ग्लानि, पसलियों में पीड़ा, दर्शनशक्ति का नाश, पिण्डलियों में ऐंठन, दाह, सक्थिसाद, बल की हानि, मल और मूत्र में रक्त की प्रवृत्ति, शूल, रात्रि को नींद न आना और दिन में आना, गुदा तथा बस्ति में भयकर पीडा होती है, रोगी का अंग-प्रत्यंग टूटता है, हिचकी आती है और प्रलाप करता है, मूर्च्छा आती है तथा कभी-कभी चिल्लाना भी है। इसको विस्फुरक सन्निपात कहते है।

२. पित्तोल्बण या आशुकारी सन्निपात में अन्तर्दाह तथा बहिर्दाह उभयविध ज्वर रहता है। इस अवस्था में शीतल पदार्थों का सेवन करने से कफ और वायु भी प्रकुपित हो जाते हैं जिससे हिचकी, श्वास, प्रमीलक, विसूचिका, जोड़ों में दर्द, प्रलाप, गौरव, क्लम, नाभि और पार्श्व में पीड़ा तथा स्वेद होता है। स्वेद के साथ-साथ स्रोतों से रक्त भी निकलने लगता है, शूल से अत्यधिक पीडित होने के कारण प्यास तथा दाह बढ जाती है। यह सन्निपात असाध्य होता है, इससे आक्रान्त होने पर रोगी चौबीस घण्टे में ही मर जाता है, अतएव इसे शीघ्रकारी सन्निपात कहते हैं।

( पित्तोल्बण सन्निपात को आधुनिक दृष्टि से आन्त्रिक ज्वर ( Typhoid ) नाम दिया जा सकता है। आन्त्रिक ज्वर में आन्त्रगत रक्तस्राव या आन्त्र के सच्छिद्र ( Perforated ) हो जाने पर रोगी असाध्य हो जाता है। रक्तस्राव या छिद्र होने से पूर्व तक ज्वर तीव्र रहता है किन्तु इसके बाद तुरन्त ही तापक्रम प्रकृत से भी कम हो जाता है, नाडी की गति तीव्र हो जाती है, उदर में तीव्र शूल तथा रोगी को प्यास लगती है, ठण्डा पसीना आ जाता है। यह अवस्था असाध्यता की द्योतक है। साधारण पित्तोल्बण सन्निपात असाध्य नहीं होता, अपथ्य सेवन करने से उपद्रव उत्पन्न हो जाने पर ही वह असाध्य कोटि में आता है।)

३. कफोल्बणसन्निपातज्वर या कम्पणज्वर में शीतज्वर, निद्रा की अधिकता, शरीर में भारीपन, आलस्य, तन्द्रा, वमन, मूर्च्छा, प्यास, जलन, तृप्ति, अरुचि, हृदय में जकड़ाहट, बार-बार थूकने की प्रवृत्ति, मुख की मधुरता, सुनने, बोलने तथा देखने की शक्ति का नाश ये लक्षण होते हैं। इस अवस्था में यदि वैद्य कफ को वश में करने का प्रयास करता है तो पित्त प्रकुपित होकर उपद्रव युक्त ज्वर को उत्पन्न कर देता है। फिर यदि पित्त को भी वश में करने का यत्न किया जाय तो वायु का प्रकोप हो जाता है। इस अवस्था में यदि रोगी स्नान कर ले या कुछ खा ले तो वह तीन दिन से अधिक जीवित नहीं रहता। यह सन्निपात मेद धातुगत होता है।

शेष दस प्रकार के सन्निपात मधुकोष एवं [४] परिशिष्ट में स्वयं देख लें। ज्वरों के केवल नाम ही यहाँ दिये जाते हैं विस्तार-भय से प्रत्येक का लक्षण करना यहाँ अपेक्षित नहीं मालूम होता—

४. वातपित्तोल्बण सन्निपातज्वर—विभुसन्निपात।

५. पित्तश्लेष्मोल्बण सन्निपातज्वर—फल्गु सन्निपात।

६. वातश्लेष्मोल्बण सन्निपातज्वर—मकरी सन्निपात।

७. हीनवात मध्यपित्त कफोल्बण सन्निपातज्वर—वैदारिक सन्निपात।

८. मध्यवात हीनपित्त कफोल्बण सन्निपातज्वर—कर्कोटक सन्निपात।

९. अधिकवात मध्यपित्त हीनकफ सन्निपातज्वर—सम्मोह सन्निपात।

१०. हीनवात वृद्धपित्त मध्यकफ सन्निपातज्वर—याम्यक सन्निपात।

११. मध्यवात अधिकपित्त हीनकफ सन्निपातज्वर—क्रकच सन्निपात।

१२. अधिकवात हीनपित्त मध्यकफ सन्निपातज्वर—पाकल सन्निपात ।

१३. प्रवृद्धत्रिदोष सन्निपातज्वर—कूटपाकल सन्निपात ।

यह अन्तिम सन्निपात अत्यन्त भयानक स्थिति का है, इसमें रोगी की चेतना पूर्णतया नष्ट हो जाती है केवल मन्द-मन्द श्वास लेता है, शरीर अकड़ जाती है और आँखें भी पथराने लगती हैं ।

**सन्निपात विवेचन**—अब यहाँ सन्देह होता है कि वात आदि दोष जल और अग्नि के समान विरुद्ध गुणवाले हैं यथा वायु रूक्ष आदि गुणों से युक्त है कफ के स्निग्ध आदि गुण इसके विपरीत हैं, इसी प्रकार कफ और वात दोनों शीत हैं, किन्तु पित्त उष्ण है, अतः ये स्वभावतः एक दूसरे का नाश करने वाले होते हुए मिलकर सान्निपातिक ज्वर या अन्य रोग को कैसे उत्पन्न कर सकते हैं ? इसका समाधान करते हुए दृढबल ने कहा है ।

**'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम् । दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव ॥'**

अर्थात् जिस प्रकार सहज और सात्म्य होने के कारण घोर विष सर्प को नष्ट नहीं करता उसी प्रकार दोष भी सहज और सात्म्य होने के कारण परस्पर विरुद्ध गुण वाले होते हुए भी एक दूसरे का नाश नहीं करते । कुछ लोग इस युक्ति का सदोष बताते हैं । उनका कहना है कि सहज हेतु अनैकान्तिक है[1] । क्योंकि शरीरस्थ दोष शरीर की सहज धातुओं का विनाश करते ही हैं । सात्म्य हेतु भी वास्तव में हेतु नहीं साध्यसम नाम का हेत्वाभास ही है[2] । वस्तुतः सात्म्य वह है जो अबाधक है और दोषों का परस्पर अबाधकत्व हो सिद्ध करना है । अतः सात्म्य हेतु देकर कहना कि दोष अबाधक होने से एक दूसरे का नाश नहीं करते, ठीक नहीं । अतः सहज तथा सात्म्य होने से दोष एक दूसरे के घातक नहीं होते यह कहना अनुपयुक्त है ? इस पर कहते हैं कि अनुपघात से कौन अर्थ ग्रहण किया जाता है ? क्या विकृति उत्पन्न न करना ही अनुपघात है या मूलोच्छेदन ( पूर्णनाश ) न करना ? यदि विकृति उत्पन्न न करना यह अर्थ किया जाय तो ठीक नहीं क्योंकि एक दोष दूसरे दोष को विकृत करता ही है **'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्'** । यथा—वस्तिगत वायु प्रकुपित होकर शुक्र सहित मूत्र, पित्त और कफ को सुखाकर अश्मरी उत्पन्न कर देता है—

**विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ।**
**यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥** ( चरकः )

इसी प्रकार वाग्भट ने भी ऊरुस्तम्भ की सम्प्राप्ति में दोषों की परस्पर दूषकता का निर्देश किया है—**'सश्लेष्ममेदः पवनः पाममत्यर्थसंचितम् । अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥**
**सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च ।**
**तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥'**

दोष एक दूसरे का पूर्ण नाश नहीं करते यह द्वितीय पक्ष सिद्ध ही है; क्योंकि शास्त्र में कहीं भी दोषों तथा धातु के अथवा केवल दोषों के ही परस्पर पूर्णतया नाशक होने का कोई प्रमाण उपलब्ध नहीं होता । यदि ये एक दूसरे का समूल नाश करें तो मृत्यु हो जायगी ही; क्योंकि दोष शरीर के धारक हैं । सुश्रुत ने लिखा है—

---

१. अनैकान्तिकः सव्यभिचारः' व्यभिचारः—एकत्राव्यवस्था-हेतु का पक्ष में घटना किन्तु सपक्ष में न घटना 'अनैकान्तिक' कहलाता है । यथा 'सहजत्वात्' यह हेतु दोनों के साथ तो घटता है किन्तु उनके साथ ही निरन्तर रहने वाली धातुओं के साथ नहीं घटता अतः यह हेत्वाभास ही है, हेतु नहीं ।

२. 'साध्याविशिष्टः साध्यत्वात् साध्यसमः' जो हेतु स्वयं सिद्ध न हो साध्य ही हो उसे साध्यसम हेत्वाभास कहते हैं ।

**'विसर्गादानविक्षेपैः सोमसूर्यानिला यथा। धारयन्ति जगद्देहं कफपित्तानिलास्तथा ॥'**

इसलिये 'दोष एक दूसरे का नाश नहीं करते' दृढबल के इस वचन का अर्थ यदि 'पूर्णतया नष्ट नहीं करते' यह किया जाय तो अनैकान्तिक दोष की सम्भावना नहीं रहती।

विष विषादकारक होने से सर्पों में भी विषाद उत्पन्न करता है अतः इस दृष्टान्त को विफल मानना भी ठीक नहीं; क्योंकि विष में विषाद गुण के अतिरिक्त प्राणनाश का भी गुण होता है, यह गुण सर्पों पर प्रभाव नहीं करता। इसी प्रकार दोष परस्पर विकृत तो होते हैं किन्तु एक दूसरे का सर्वथा नाश नहीं करते, इस तरह उक्त दृष्टान्त में अपूर्णता नहीं है। इसके अतिरिक्त दृष्टान्त भी सर्वगुणों को लेकर नहीं दिये जाते। दृढबल ने जो 'सात्म्यत्वात्' यह हेतु दिया है उसका अर्थ यह है कि पूर्णनाश न करने से सात्म्यवत् प्रतीत होने के कारण परस्पर सात्म्य है और एक दूसरे का नाश भी नहीं करते। जो वस्तु जैसी प्रतीत होती है उसके लिए वैसा ही निर्देश किया जाता है। जैसे धूम अग्नि का कार्य प्रतीत होता है अतः वह अग्नि के कार्य रूप में ही निर्दिष्ट होता है। चक्रदत्त ने दोनों हेतुओं को एकत्र मिलाकर व्याख्या की है—**'सहजं स्वाभाविकं दोषाणां सात्म्यत्वम्'** अर्थात् दोष का सात्म्यत्व स्वाभाविक है। दृढबल के दोनों हेतुओं से अरुचि रखते हुए गयदास ने दोषों के परस्पर अनुपघात के दूसरे ही हेतु दिये हैं—

**'दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके। विरुद्धैः स्वगुणैः कश्चिन्नोपघातः परस्परम् ॥'**

अर्थात् दैवयोग से या दोषों के स्वभाव के कारण सन्निपात की अवस्था में परस्पर विरुद्ध गुणों से भी दूसरे का नाश नहीं होता। वस्तुतः सान्निपातिक रोग होते ही हैं चाहे जैसे भी हों।

सन्निपातज्वरस्यासाध्यतामाह—

## दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
## सन्निपातज्वरोऽसाध्यः, कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २४ ॥

( च. चि. अ. ३ )

दोष तथा मलों के विबद्ध ( बहिः प्रवृत्ति का अभाव ) होने पर जाठराग्नि के नाश हो जाने पर और सर्वसम्पूर्ण लक्षणों से युक्त सन्निपातज्वर असाध्य होता है। इसके विपरीत दोषों के बिबद्ध न होने पर, अग्नि प्रदीप्त रहने पर तथा सम्पूर्ण लक्षणों की उत्पत्ति न होने पर सन्निपात-ज्वर कृच्छ्रसाध्य होता है ॥ २४ ॥

**तस्य सन्निपातज्वरस्यासाध्यलक्षणमाह—दोषे विबद्ध इत्यादि। दोषो मलं पित्तादिश्च;** जेज्जटस्तु मलमेवाह,[1] विबद्ध इति वचनात्। नष्टाग्नित्वमाहारापाकगम्यम्[2]। यदुक्तं चरके-'अग्निं जरणशक्त्या' ( च. चि. अ. ४ ) इति। असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति दर्शितम्। उक्तं हि चरके-'सन्निपातो दुश्चिकित्स्यानाम्' ( च. सू. अ. २५ )-इति। तथा भालुकिः 'मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता' इति। सर्वसम्पूर्णलक्षण इति सर्वाणि समग्राणि, संपूर्णानि बलीयांसि, लक्षणानि यस्य स तथा ॥ २४ ॥

**विमर्श**—सर्वसम्पूर्ण शब्द से समग्र एवं अति बलवान् लक्षणों का ग्रहण किया जाता है। इससे पूर्ण शक्ति के साथ उत्पन्न समग्र लक्षणों से युक्त सन्निपातज्वर असाध्य होता है। लक्षण कम एवं पूर्ण बलवान् न होने पर कृच्छ्रसाध्य रहता है, किन्तु सुखसाध्य कभी नहीं होता। चरक ने सन्निपात को दुश्चिकित्स्य माना है-**'सन्निपातो दुश्चिकित्स्यानाम्'**। ( च. सू. २५ ) भालुकि ने भी सन्निपात को मृत्यु के समान माना है-**'मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता।**

१. 'मलं पुरीषमाह' इति आ. द.। २. 'आहारापाचकत्वम्' इति क.।

सन्निपातज्वरस्य कालमर्यादामाह—

**[ सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।**
**पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ १ ॥**

**( सु. उ. अ. ३९ )**

**सप्तमी द्विगुणा चैव नवम्येकादशी तथा ।**
**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ २ ॥ ]**

वातप्रधान सन्निपात ज्वर सातवें दिन, पित्तप्रधान दसवें दिन तथा कफप्रधान सन्निपात ज्वर बारहवें दिन अत्यन्त प्रबल होकर या तो शान्त हो जाता है या रोगी को मार ही डालता हैं ।

कभी कभी वातप्रधान चौदहवें दिन, पित्तप्रधान अठारहवें दिन और कफप्रधान सन्निपात ज्वर चौबीसवें दिन उतरता है । यह त्रिदोष की मर्यादा है, इसमें रोगी या तो स्वस्थ होने लगता है या मर जाता है ॥ १-२ ।

**विमर्शः**—त्रिदोष की इस मर्यादा में रोगी का जीवन या मरण दो बातों पर निर्भर है । यदि मल का पाक होता है तो रोगी बच जाता है, किन्तु यदि धातुपाक हो जाय तो रोगी मर जाता है । वातोल्बण सन्निपात अतिशीघ्र क्रियाकारी है अतः सात या चौदह दिन मे ही मलपाक हो जाने से रोगी जीवित रहता है, किन्तु धातुपाक हो जाने पर मर जाता है । पित्तोल्बण सन्निपात की गति वातोल्बण से कम होती है अतः दस दिन या अठारह दिन में मल पाक होने से जीवन और धातुपाक होने से मृत्यु हो जाती है । कफोल्बण सन्निपात सबसे मन्द होता है अतः बारह या चौबीस दिन में मलपाक होने पर रोगी जीवित रहता है और धातुपाक हो जाने पर मर जाता है । तन्त्रान्तर में भी कहा है—

**पित्तकफानिलवृद्धया दशदिवसद्वादशाहसप्ताहात् ।**
**हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात् ॥**

तन्त्रान्तर में धातुपाक के लक्षण निम्न प्रकार से मिलते हैं—

**सम्बाध्यमानो हृदि नाभिदेशे गात्रेषु वा पाकरुजान्वितेषु ।**
**पक्वेषु वा तेषु रुजाज्वरार्तः स धातुपाकी कथितो भिषग्भिः ॥**

सन्निपातज्वरस्योपद्रवमाह—

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।**
**शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥ २५ ॥**

**( च. चि. अ. ३ )**

सन्निपात ज्वर के अन्त में कर्णमूल में एक भयकर शोथ हो जाता है, इससे कोई ही रोगी बचता है ॥ २५ ॥

**सन्निपातज्वरोपद्रवमाह—सन्निपातेत्यादि ॥ २५ ॥**

**विमर्श**—यह शोथ कर्णमूलक नामक लाला ग्रन्थि ( Parotid gland ) में होता है । अधिक क्षीण रोगियों में यह शोथ हो जाता है । कभी-कभी पक भी जाता है और अच्छी उपयुक्त चिकित्सा होने पर ठीक भी होता है । कर्णमूलिकज्वर ( Mumps ) में होने वाले कर्णमूल शोथ से यह शोथ भिन्न है । कर्णमूलिकज्वर का शोथ साध्य होता है । कोई लोग **'कश्चिदेव प्रमुच्यते'** का अर्थ यह कहते हैं कि इस शोथ से कोई ही बचता है प्रायः सभी को यह शोथ होता है । इस प्रकार वे इसे असाध्य भी नहीं मानते । वस्तुतः यह असाध्य ही है, क्योंकि तन्त्रान्तर में भी कहा है—

**'ज्वरादितो वा ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः।**
**क्रमेण साध्यस्त्वथ कृच्छ्रसाध्यस्तथाप्यसाध्यः कथितो मुनीन्द्रैः ॥'**

अर्थात् सन्निपातज्वर के आदि में होने वाला कर्णमूल शोथ साध्य, मध्य में होने वाला कृच्छ्रसाध्य और अन्त में होने वाला शोथ असाध्य होता है।

सन्निपातस्यैव भेदमभिन्यासज्वरमाह—

[ त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः ।
आमाभिवृद्ध्या ग्रथिता बुद्धीन्द्रियमनोगताः ॥ १ ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम् ।
श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां काञ्चिदीहते ॥ २ ॥
न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ।
न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते ॥ ३ ॥
शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति ।
कूजति तुद्यते चैव परिवर्तनमीहते ॥ ४ ॥
अल्पं प्रभाषते किञ्चिदभिन्यासः स उच्यते ।
प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिद्ध्यति ॥ ५ ॥ ]

तीनों दोष उरःस्रोत ( वक्षःस्थल, हृदय, फुफ्फुस एवं श्वास-प्रणाली ) में घूमते हुए आम दोष की अत्यधिक वृद्धि से ग्रथित होकर मन एवं ज्ञानेन्द्रियों पर प्रभाव डालकर अभिन्यास नाम के भयंकर ज्वर को उत्पन्न करते हैं। इससे रोगी कानों से सुन नहीं सकता, आँखों से देख नहीं पाता, किसी प्रकार की चेष्टा प्रिय नहीं होती, उसका घ्राणज्ञान, स्पर्शज्ञान तथा शब्दज्ञान नष्ट हो जाता है। रोगी सिर को बार बार इधर-उधर पटकता है, भोजन की इच्छा नष्ट हो जाती है, कबूतर के समान घुर्घुर शब्द करता है, उसके शरीर में सुई के चुभने जैसी पीडा होती है, रोगी बार-बार करवट बदलने की इच्छा करता है, बहुत कम बोलता है, इस भयंकर ज्वर को अभिन्यास कहते हैं, इस अवस्था से पीड़ित कोई ही रोगी बच पाता है, इसीलिये इसको असाध्य कहा है ॥ १-५ ॥

**विमर्श**—इसको कोई लोग 'हतौजस' भी कहते हैं क्योंकि इस अवस्था में शरीर के ओज का बहुत अंश नष्ट हो जाता है। कविराज गणनाथसेनजी इसे तीव्रविषमयता ( Sever toxaemia ) जन्य ज्वर या अतितीव्रज्वर ( Hyperpyrexia ) भी कहते है। आन्त्रिकज्वर की तीव्र विषमयता में भी ये लक्षण मिलते हैं। चरक ने समत्रिदोष सन्निपात तथा विषमत्रिदोष इन दो प्रकार के सन्निपातों का वर्णन किया है। माधव ने **'क्षणे दाहः'** इत्यादि के द्वारा केवल समत्रिदोष सन्निपात का ही वर्णन किया है। विस्फुरक, शीघ्रकारी, कम्पण तथा अभिन्यास आदि विषमत्रिदोष सन्निपात ज्वर के उदाहरण हैं, इनका वर्णन माधव ने नहीं किया है। पाँचों प्रकार के विषम ज्वर ( सन्तत, सतत, अन्येद्युष्क, तृतीयक तथा चतुर्थक ) भी विषमत्रिदोष के ही उदाहरण है। इनके द्वारा पृथक्-पृथक् विभिन्न धातुयें दूषित होती हैं जब कि समत्रिदोष सन्निपात से सभी धातुयें समान रूप से दूषित होती हैं।

आगन्तुज्वरं प्राह—

**अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः ।**
**आगन्तुर्जायते दोषै[2]र्यथास्वं तं विभावयेत् ॥ २६ ॥**

अभिघात, अभिचारकर्म, अभिशाप तथा अभिषङ्ग से चार प्रकार का आगन्तुक ज्वर उत्पन्न होता है। इसमें भी कारणानुसार दोषों की कल्पना करनी चाहिये ॥ २६ ॥

विषजन्यं ज्वरमाह—

**श्यावास्यता विषकृते तथाऽतीसार[1] एव च ।**
**भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ २७ ॥**

विषजन्य ज्वर में मुख का वर्ण नीला पड़ जाता है, रोगी अतिसार, अरुचि तथा प्यास से पीड़ित रहता है, शरीर में सुई के समान चुभान होती है और मूर्च्छा भी आती है ॥ २७ ॥

ओषधिगन्धजं ज्वरमाह—

**ओषधिगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ।**

ओषधि की गन्ध से होने वाले ज्वर में मूर्च्छा, शिरोवेदना, वमन तथा छींकें आती हैं।

कामज्वरलक्षणान्याह—

**कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमभोजनम् ॥ २८ ॥**
**हृदये वेदना चास्य गात्रं च परिशुष्यति ।**

कामज्वर में चित्तविभ्रंश, तन्द्रा, आलस्य, भोजन की अनिच्छा, हृदयप्रदेश में वेदना तथा मुख का सूखना ये लक्षण होते हैं ॥ २८ ॥

भयादिजन्यमागन्तुज्वरं लक्षयति—

**भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः ।**
**अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥ २९ ॥**
**भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ।** (सु. उ. तं. अ. ३९)

भयज तथा शोकज ज्वर में प्रलाप होता है। कोपजन्यज्वर में कम्पन होता है। अभिचार और अभिशापजन्य ज्वर में मूर्च्छा तथा प्यास होती है, भूताभिषंगज ज्वर में घबराहट, कभी हंसी और कभी रोने की प्रवृत्ति तथा कम्पन होता है ॥ २९ ॥

आगन्तुज्वरमाह—अभिघातेत्यादि। अभिघातोऽभिहननं शस्त्रलोष्टमुष्टिलगुडादिभिः, अभिचारः श्येनादियागकृतः, अथवा विपरीतैर्मन्त्रैर्लोहस्रुचा सर्षपादिहोम इत्याहुः। अभिषङ्गः कामादीनां भूतानां च सम्बन्धः, यदुक्तं चरके—'कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः' (च. चि. अ ३) इति। अभिशापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशंसनम्। तं चागन्तुज्वरं यथास्वं दोषैर्जानीयात्। यदुक्तम्-'कामशोकभयाद्वायुः' इत्यादि। अयं च दोषसंबन्धः पश्चाद्भावी न त्वारम्भक इति संप्राप्त्यवसरे निरूपितम्। श्यावास्यतेत्यादि। श्यावः शुक्लानुविद्धः कृष्णो वर्णः; श्यामवर्ण इत्यन्ये। विषकृते स्थावरविषभक्षणादिकृते; अतीसारः तद्विषस्याधोगत्वात्। ओषधिगन्धज

१. 'शोथोऽतीसार एव च' इति ग। २. 'प्रकृतिकर्मवशादित्यर्थः' इति। ३. शाकवर्णः' इति ख।

इति [1]तीव्रौषधिगन्धघ्राणजे, 'पुष्पेभ्यो गन्धरजसी [2]ओजस्विभ्यो यदाऽनिलः' ( सु. उ. अ. ३९ ) इत्यादिना वृद्धसुश्रुतेन पठितं तृणपुष्पाख्यं ज्वरमत्रैवान्तर्भावयन्ति। कामज- इत्यादि अभिमतकामिन्यप्राप्तिनिमित्ते। चित्तविभ्रंशो भ्रमादिः। यदाह—वाग्भटः—'कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः' (वा. नि. अ. २ ) इति। भयादिति भयाज्जाते ज्वरे। एवं शोकात् कोपादित्येतयोर्बोद्धव्यं; शोकात् प्रलाप इति संबन्धः प्रलापश्चात्र वात- कार्यः, तस्य वातपित्तकार्यत्वात्। ([3]विशेषनिश्चयस्तु निदानात्, निदानमपि लक्षणं भवति) उक्तं च-'कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः' ( च. चि. अ. ३ )-इत्यादि। यद्येवं तत् कुतः क्रोधजे वेपथुः? तस्य वातकार्यत्वात्। उच्यते-'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्' इति वचनात् पित्तकोपितवातजन्य एवात्र वेपथुः, क्रुद्धश्च वेपमानो दृश्यत इति न हि दृष्टेऽनुपपन्नं नामेति जेजटः। क्रोधः [4]पित्तमिव वातं च कोपयतीति, तदुक्तम्। यदाह विदेहः-'क्रोधशोकौ स्मृतौ वातरक्तपित्तप्रकोपणौ' इति कोपाच्चेति चकारेण शिरोरुजं समुच्चिनोति। यदाह वाग्भटः-'क्रोधात् कम्पः शिरोरुक् च, प्रलापो भयशोकजः' ( वा. नि. अ. २ )-इति। मानसत्वाविशेषेऽपि भयादीनां पृथगुपादानं हेतुभेदात्, [5]हेतुभे- दाच्च भेदाभिधानं हेतुप्रत्यनीकचिकित्सार्थमिति। अभिचारेत्यादि। तृष्णा चेति चकारेणा- भिचारजे दाहादिकं समुच्चिनोति। यदुक्तं हारीतार्थानुवादिना वाग्भटेन—'तत्राभिचारिकै- र्मन्त्रैर्हूयमानस्य तप्यते। पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः॥ सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्धते ज्वरः' ( वा. नि. अ. २ )-इति। भूताभिषङ्गादिति भूता देवग्रहादय उन्माद- निदाने वक्ष्यमाणाः, तेषामभिषङ्गः संबन्धः। उद्वेग उद्विग्नचित्तता॥ २६-२९॥

**विमर्श**—लाठी तथा अन्य शस्त्रों के प्रहार के कारण रक्तस्राव या पीडाधिक्य से होने वाला ज्वर अभिघातक ज्वर कहलाता है। शत्रु को नष्ट करने के निमित्त प्रयुक्त अभिचारकर्मों से जो ज्वर होता है उसे अभिचारज ज्वर कहते हैं। गुरुजनों एवं तपस्विजनों के शाप के कारण उत्पन्न ज्वर को अभिशापज तथा काम, क्रोध, शोक तथा भय आदि मानसिक कारणों एवं भूत ( देवादि ग्रह तथा जीवाणु ) सम्बन्ध होने वाले ज्वर को अभिषङ्गज ज्वर कहते हैं—

'कामशोकभयक्रोधैरभिषक्तस्य वा ज्वरः। सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः॥' चरक

अभिप्रेत कामिनी की अप्राप्ति से कामज्वर उत्पन्न होता है। कामज्वर में रोगी को गहरे-गहरे श्वास आते हैं तथा वह कुछ ध्यानमग्न-सा रहता है। इनके अतिरिक्त रोगी का धैर्य, लज्जा तथा निद्रा नष्ट हो जाती है, शरीर में दाह एवं भ्रम होता है। वाग्भट ने कहा भी है—

**'कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः'**

**'कामशोकभयाद्वायुः'** इस वचन के अनुसार काम, शोक और भय से वायु की वृद्धि होती है, इस प्रकार शोकज और भयज ज्वर में वात का कार्य प्रलाप मिलता है। यद्यपि कम्पन वात का कार्य है अतः पित्त के वर्धक क्रोध से उत्पन्न न होना चाहिये तथापि क्रोधजन्य पित्त वात को भी प्रकुपित करके इस लक्षण को उत्पन्न कर देता है। **'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्'**। इसके विपरीत क्रोध से पित्त के समान वायु की भी वृद्धि होती है क्योंकि विदेह ने कहा है— **'क्रोधशोकौ स्मृतौ वातपित्तरक्तप्रकोपणौ।'** क्रोध से मनुष्य कांपने लगता है यह प्रत्यक्ष दृष्ट है। कोपज ज्वर में शिरोवेदना भी होती है और नेत्र लाल रहते हैं **'क्रोधात्कम्पः शिरोरुक् च प्रलापो भयशोकजः'**। ( वा० नि० ) **'शिरोरुगरुचिर्ध्यानं नेत्ररागश्च कोपजे'** ( सि० नि० )

१. 'ओषधिगन्धघ्राणजे' क ख। २. 'ओषधीभ्यः' इति क ख। ३. अयं पाठः क ख पुस्तकयोः नोपलभ्यते। ४. 'पित्तमथ च' इति क। ५. 'हेतुभेदाभिधानं च' इति क ख।

यद्यपि भयज आदि सभी ज्वर मानसिक हैं किन्तु फिर भी चिकित्सावैशिष्ट्य के लिये प्रत्येक का वर्णन पृथक् किया गया है ।

आगन्तुज्वरेषु दोषानुबन्धतां प्राह—

**कामशोकभयाद्वायुः, क्रोधात्पित्तं, त्रयो मलाः ॥ ३० ॥**
**भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः । (च. चि. अ. ३)**

काम, शोक तथा भय से वायु का प्रकोप होता है, क्रोध से पित्त का प्रकोप होता है, भूताभिषङ्ग से तीनों दोष प्रकुपित हो जाते हैं तथा तत्तद्भूत के लक्षण प्रकट होते हैं ॥ ३० ॥

आगन्तुज्वरेष्वपि प्रतिनियतदोषानुबन्धदर्शनार्थमाह—कामशोकेत्यादि । त्रयो मला भूताभिषङ्गात् कुप्यन्तीति भूतप्रभावात् । यच्च चरकेण निदानस्थाने 'अभिषङ्गजः पुनर्वातपित्ताभ्याम्' (च. नि. अ. १) इत्युक्तं, तत् प्रायिकमन्तव्यमिति जेज्जटः । चक्रस्त्वाह—'अभिषङ्गज इत्यनेन कामाद्यभिषङ्गज उच्यते नतु भूताभिषङ्गजः' इति । भूतसामान्यलक्षणा इति यस्य भूतस्य देवग्रहादेरभिषङ्गात् कुप्यन्ति तस्य यल्लक्षणं रोदनादि तेन सह सामान्यं लक्षणं येषां ते तथा, इति व्याचक्षते जेज्जटादयः; दोषलक्षणानि भूतलक्षणानि च भवन्तीत्यर्थः ॥ ३० ॥

विमर्शः—भूत शब्द का तात्पर्य देव, असुर, गन्धर्व आदि से है । इनके सम्पर्क से उत्पन्न ज्वर में प्रायः त्रिदोष प्रकोप के कारण दोषज लक्षण भी होते हैं, साथ ही जिस विशिष्ट ग्रह का सम्पर्क होता है उसके अनुसार भी रोदनादि लक्षण होते हैं । भूत शब्द का सामान्य अर्थ प्राणी भी होता है । इस प्रकार जीवाणुओं का भी समावेश भूताभिषङ्गज आगन्तु ज्वरों में हो सकता है । कुछ लोग भूत और अभिषङ्ग शब्दों को अलग-अलग मानकर भूत से देवादि ग्रह और अभिषङ्ग से कामादि का अभिषङ्ग मानते हैं ।

विषमज्वरस्य सम्प्राप्तिमाह—

**दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥ ३१ ॥**
**धातुमन्यतमं प्राप्य करोति विषमज्वरम् । (सु. उ. अ. ३९)**

आरम्भ से ही अल्प (निर्बल) दोष अथवा ज्वर के छूट जाने पर अवशिष्ट अल्पदोष मिथ्या आहार-विहार से पुनः प्रकुपित होकर रस आदि धातुओं में से किसी को भी प्राप्त होकर विषमज्वर को उत्पन्न करता है ॥ ३१ ॥

अथ विषमज्वरसंप्राप्तिमाह—दोषोऽल्प इत्यादि । अल्प इत्यनेनाबलत्वात् कालविशेषमवाप्य लब्धबलो ज्वरयति, यस्तु बलवान् स नित्यज्वरमेव करोति । अहितसंभूत इति अहिताहाराचारादिसंभूतो'[1] वृद्धः । ज्वरोत्सृष्टस्य सहसा निवृत्तज्वरस्य । वाशब्देन प्रथमतोऽपि विषमज्वरो भवतीति दर्शयति । यदुक्तम्—'आरम्भाद्विषमो यस्तु' इत्यादि । धातुमन्यतमं रसरक्तादिकम् । विषमज्वरं तृतीयकादिकम् । विषमज्वरसामान्यलक्षणं च भालुकिना पठितं— 'यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च । वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः' इति ॥ ३१ ॥

विमर्शः—विषमज्वर के विषय में भालुकि ने संक्षेप में लिखा है—
'यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च । वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः ॥'
जो ज्वर अनियमित रूप से गर्मी या सर्दी लगने के बाद अनियमित काल में आता है तथा

१. 'चारादिजनितः' इति क ख ।

जिसका वेग भी विषम होता है ( कभी तीव्र सन्ताप से और कभी मन्द सन्ताप से चढ़ता है ) उसे विषमज्वर कहते हैं। काल आदि के वैषम्य के कारण ही इसे विषमज्वर कहते हैं। वाग्भट ने भी कहा है—**'विषमो विषमारम्भक्रियाकालोऽनुषङ्गवान्'**

अर्थात् जिसका आरम्भ, क्रिया तथा काल विषम हो वह विषमज्वर कहलाता है। कभी ज्वर सिर से प्रारम्भ होता है तो कभी पृष्ठ से, इसे विषमारम्भ कहते हैं। कभी ज्वर में शीत अधिक लगता है तो कभी सन्ताप, इसे विषमाक्रिय कहते हैं। आक्रमणकाल तथा भोगकाल भेद से काल दो प्रकार का है। अन्येद्युष्क, तृतीयक तथा चतुर्थक ज्वर के वेग के दिन भी निश्चित समय से पूर्व या पश्चात् आक्रमण होना आक्रमणकाल का वैषम्य है। इसी प्रकार भोगकाल भी कम या अधिक हो सकता है। कभी ज्वर अल्पकाल तक और कभी दीर्घकाल तक भी रहता है।

कतिपय विद्वान् 'मुक्तानुबन्धित्वं विषमत्वम्' 'जो छोड़कर पुनः हो जाय' विषमज्वर का यह लक्षण करते हैं। यदि इस लक्षण को स्वीकार किया जाय तो सन्तत ज्वर को विषम ज्वर के अन्तर्गत नहीं मान सकते, क्योंकि वह निरन्तर बना रहता है। **'सन्तत्या योऽविसर्गी स्यात्'।** इसी आशय से खरनाद ने भी सन्तत को छोड़कर शेष चार को ही विषमज्वर कहा है—

**ज्वराः पञ्च मयोक्ता ये पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः॥**

इस पर कहते हैं कि सन्तत में भी मुक्तानुबन्धित्व ( छोड़कर होना ) की प्रवृत्ति मिलती है; क्योंकि चरक ने कहा है—

**विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः। दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते।** च. चि. ३)

अर्थात् सन्तत ज्वर कदाचित् बारहवें दिन अव्यक्त रूप से ( बहुत थोड़े समय के लिये ) उतरता है पुनः चढ़कर दीर्घकाल तक बना रहता है। इस प्रकार इस स्वल्पकालीन अव्यक्त स्वरूप मुक्तानुबन्धित्व को लेकर सन्तत ज्वर को भी विषमज्वर कहा जा सकता है। खरनाद ने लक्षणों तथा चिकित्सा में भेद प्रदर्शित करने के निमित्त ही सततज्वर को विषमज्वर से भिन्न कहा है अथवा स्वल्पकालीन और अव्यक्त मोक्ष को मोक्ष नहीं माना है, जैसे उपवास में एक तण्डुल खाने को भोजन नहीं मानते। अन्य आचार्यों ने यद्यपि तृतीयक आदि के समान स्पष्ट मुक्तानुबन्धित्व इसमें नहीं मिलता तथापि कादाचित्क मुक्तानुबन्धित्व के बल पर ही सन्ततज्वर को भी विषमज्वर माना है। वस्तुतः सन्तत ज्वर को विषमज्वर न मानना ही ठीक प्रतीत होता है। क्योंकि विषम ज्वर से ही स्पष्ट है कि कोई समज्वर भी होता है और वह समज्वर सन्तत के अतिरिक्त दूसरा कौन होगा? सम के ज्ञान के बाद ही विषमज्वर का ज्ञान सम्भव है अतः सर्वप्रथम सम ( सन्तत ) ज्वर का और बाद में चार विषम ज्वरों का वर्णन किया गया है। अथवा यदि सन्तत को भी विषम मानने का ही आग्रह किया जाता है तो अर्वाचीन क्रम से सन्तत ज्वर के दो भेद मानना उचित होगा। १—सम सन्तत—जिसमें ज्वरवेग प्रायः सदैव एक समान रहता है या जिसमें अत्यल्प चढ़ाव उतार होता है (Continuous)। २—विषम सन्तत—जिसमें पूर्ण विसर्ग न होते हुए भी चढ़ाव उतार बहुत हों ( Remittent )।

वस्तुतः **'मुक्तानुबन्धित्वं विषमत्वम्'** यह लक्षण भी विचारणीय ही है; क्योंकि विषमज्वर में सर्वथा ज्वर से मुक्ति नहीं मिलती। साधारणतया ज्वर मोक्ष की प्रतीति होते हुए भी ज्वर चिरकाल पर्यन्त आन्तरिक धातुओं में प्रच्छन्न रूप से अवस्थित रहता है। इस विषय में सुश्रुत ने कहा भी है—

**स चापि विषमो देहं न कदाचिद्विमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते॥**
**वेगे तु समतिक्रान्ते गतोऽयमिति कथ्यते। धात्वन्तरस्थो लीनत्वान्न सौक्ष्म्यादुपलभ्यते॥**

( सु. उ. त. अ. ३९ )

काश्यप ने तो सुखसाध्यता एवं कृच्छ्रसाध्यता के अनुसार सम और विषमज्वर माना है तथा इसे प्रायः प्रेत एवं ग्रहजन्य माना है—

**अल्पहेतुर्बहिर्मार्गो वैकृतो निरुपद्रवः । एकाश्रयः सुखोपायो लघुपाकः समो ज्वरः ॥**
**विषमस्तद्विपर्यस्तस्तीक्ष्णत्वात् संततो मतः । तद्वत प्रेतग्रहोत्था ये चत्वारो विषमागमात् ॥**
**दुर्ज्ञेयत्वाद् दुर्ग्रहत्वादुपग्रहपरिग्रहात् । वैषम्यं संततादीनां दारुणत्वादुदाहृतम् ॥**
( काश्यप सं० खिल १ श्लो० ८-१० )

वास्तव में **'विषमारम्भक्रियाकालोऽनुषङ्गवान्'** विषमज्वर का यह वाग्भटोक्त लक्षण ही श्रेष्ठ है। कतिपय विद्वान् विषमज्वर से मलेरिया का ही ग्रहण करते हैं, किन्तु वाग्भटोक्त लक्षणों से युक्त किसी भी प्रकार का ज्वर आयुर्वेद की दृष्टि से विषम ज्वर के अन्तर्गत माना जाता है। मलेरिया भी विषम ज्वर के अन्तर्गत ही है, क्योंकि इसके लक्षण उससे अधिक मिलते हैं और विषमज्वरनाशक आयुर्वेदिक औषधियाँ मलेरिया में भी प्रभावकारी होती हैं। इस प्रकार विषम-ज्वर आगन्तु और निज भेद से दो प्रकार का होता है। केवल धातुवैषम्यकृत विषम ज्वर निज कहलाता है। रोगकारी साक्षात् बाह्यनिमित्त जीवाणु से होने वाला ज्वर आगन्तु विषम ज्वर श्रेणी में आता है। इसी आशय से सुश्रुत में कहा गया है—

**परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः । आगन्तुश्चानुबन्धो हि प्रायशो विषमज्वरे ॥**

अर्थात् विषमज्वर की उत्पत्ति में अन्य आगन्तु ( भूत या बाह्यनिमित्त रूप जीवाणु ) अथवा स्वभाव ही कारण होता है। डल्हण ने पर का अर्थ भूत ( ज्वरोत्पादक जीवाणु ? ) किया है **'परो भूतादिः हेतुः कारणं स्वभावो वेति विषमज्वरे कारणम्'**। प्रायः शब्द से यह स्पष्ट है कि उस प्रकार का ज्वर केवल धातुवैषम्यजन्य भी कभी-कभी होता है।

इस प्रकार मलेरिया पर्याय रूप में विषमज्वर शब्द का प्रयोग करना अनुचित प्रतीत होता है। यद्यपि मलेरिया में विषमज्वर के सभी भेदों के उदाहरण अधिकता से मिलते हैं तथा अन्य ज्वरों में प्रायः एक या दो ही भेद दिखाई देते हैं किन्तु किसी भी अर्वाचीन ज्वर में देश-काल-व्यक्ति विशेष के विभिन्न आहार-विहार, पथ्यापथ्य, चिकित्सा के परिणाम आदि अनेक कारणों से कभी न कभी पूर्वोक्त पञ्चविध ज्वर में से कोई भी स्वरूप मिल जाना असम्भव नहीं है अथवा कहिये कि मिलते ही हैं। अतः प्राचीन विषमज्वर संज्ञा को आधुनिक मलेरिया का पर्याय मानना ठीक नहीं। उसके लिये तो सुश्रुतोक्त औपत्यक ज्वर (उपत्यका-तराई में होने वाला ज्वर) ही उपर्युक्त प्रतीत होता है।

**वाताधिकत्वात्प्रवदन्ति तज्ज्ञास्तृतीयकञ्चापि चतुर्थकञ्च ।**
**औपत्यके मद्यसमुद्भवे च हेतुं ज्वरे पित्तकृतं वदन्ति ॥** ( सु. उ. अ. ३९ )

**विषमज्वरभेदाः—सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकाः ।** वेग के अनुसार विषमज्वर के निम्न पांच भेद किये जाते हैं—१. सन्ततज्वर—Continuous or Remittent fever. २. सततकज्वर—Double Quotidian fever. ३. अन्येद्युष्कज्वर—Quotidian fever. ४. तृतीयकज्वर—Tertian fever ५. चतुर्थकज्वर—Quartan fever.

**सन्ततादिज्वरं वर्णयति—**

**सन्ततं रसरक्तस्थः सोऽन्येद्युः पिशिताश्रितः ॥ ३२ ॥**
**मेदोगतस्तृतीयेऽह्नि, त्वस्थिमज्जगतः पुनः ।**
**कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ॥** ( सु. उ. अ. ३९ )

(अहित सेवन से प्रकुपित हुआ दोष) रस धातु में आश्रित होकर सन्तत ज्वर को उत्पन्न करता है। वही दोष रक्ताश्रित होकर सततक ज्वर की तथा मांसाश्रित होकर अन्येद्युष्क ज्वर को उत्पन्न करता है। दोष के मेदोगत होने पर तृतीयक ज्वर तथा अस्थि और मज्जागत होने पर यम के समान भयंकर तथा अनेक उपद्रवों से युक्त चतुर्थक ज्वर को उत्पन्न करता है ॥ ३२-३३ ॥

सन्ततादिज्वराणां प्रतिनियतदूष्यान् धातूनाह—सन्ततमित्यादि। सन्ततशब्दः [1]सततस्योपलक्षणः। तेनैतदुक्तं भवति—रसस्थः सन्ततं, रक्तस्थः सततकमिति; यदुक्तं चरके—'रक्तधात्वाश्रयः प्रायो दोषः[2] सततकं ज्वरम्' ( च. चि. अ. ३ ) इति ( प्रायोग्रहणात् सततको रक्तव्यतिरिक्तं रसधातुमाश्रयते[3]। ) रसग्रहणं चात्र विशेषपरं, सर्वज्वरेषु रसस्यावश्यदूष्यत्वात्। अन्ये तु सततग्रहणार्थं 'सन्ततौ रसरक्तस्थौ' इति पठन्ति। तन्नातियुक्तम्, अत्र हि सन्ततसततशब्दौ संज्ञापरौ, न तु सातत्यवचनौ; तेन सन्ततशब्देन सततकस्यानभिधानात् कथमेकशेष इति दोषः। अन्येद्युरिति अन्येद्युष्कम्। घोरं दुःसहम्। अन्तकं यममिव, मारकत्वात्, रोगसंकरम् अनेकरोगसंकुलम् ॥ ३२-३३ ॥

**विमर्श**—प्रायः शब्द से स्पष्ट है कि सततक ज्वर में दोष रस में भी आश्रित रहता है। वस्तुतः सभी ज्वरों में रस अल्पाधिक मात्रा में अवश्य दूषित होता है। केवल अस्थि या केवल मज्जा में दोष रहने पर चतुर्थक तथा दोनों ही धातुओं में होने से चतुर्थक विपर्यय ज्वर होता है। कविराज गणनाथसेनजी वातबलासक, प्रलेपक, श्लैपदिक ज्वर, उपद्रवजन्य तथा सभी धातुगत ज्वरों को भी विषमज्वर ही मानते हैं जो हमें भी अभीष्ट है। ये सभी ज्वर विषम सन्निपातजन्य हैं। प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः। सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः ॥ समसन्निपात ज्वर का वर्णन पीछे 'क्षणे दाहः' इत्यादि चरकोक्त श्लोकों के द्वारा किया जा चुका है।

सन्ततादिलक्षणानि निरूपयति—

**सप्ताहं वा दशाहं वा द्वादशाहमथापि वा।**
**सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ॥ ३४ ॥**
**अहोरात्रे सततको द्वौ कालावनुवर्तते।**
**अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्तते ॥ ३५ ॥**
**तृतीयकस्तृतीयेऽह्नि, चतुर्थेऽह्नि चतुर्थकः।** ( सु. उ. अ. ३९ )

जो ज्वर लगातार बिना उतरे सात दिन, दस दिन या बारह दिन तक चलता है उसे सन्तत ज्वर कहते हैं। जिस ज्वर के चौबीस घण्टे में दो आवेग आते हैं उसे सतत ज्वर कहते हैं। चौबीस घण्टे में एक बार चढ़ने वाला ज्वर अन्येद्युष्क कहलाता है। प्रति तीसरे दिन आने वाले ज्वर को तृतीयक और प्रति चौथे दिन आने वाले ज्वर को चतुर्थक कहते हैं ॥ ३४-३५ ॥

अथैषां लक्षणान्याह—सप्ताहमित्यादि। एते विकल्पा यथाक्रमं वातपित्तकफोल्बणत्वेन ज्ञेयाः। यथोक्तं—'पित्तकफानिलवृद्धया दशदिवसद्वादशाहसप्ताहात्। हन्ति विमुञ्चति वाऽऽशु त्रिदोषजो धातुमलपाकात्' इति। अयं च सन्ततस्त्रिदोषज एव द्वादशाश्रयत्वेन। यदुक्तं चरकेण—'यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः। युगपच्चानुपद्यन्ते नियमात् सन्तते ज्वरे' ( च. चि. अ. ३ ) इति। सन्तत्या अविच्छेदेन सप्ताहादीन् व्याप्य अविसर्गी अपरित्यागी, अत्यन्तसंयोगे द्वितीया। ननु यद्येवं कथमस्य विषमज्वरे पाठः? मुक्तानुबन्धि-

१. 'उपलक्षणम्' इति क ख, २. 'रक्तधात्वाश्रितो दोषः कुर्यात्' इति क।
३. अयं पाठः क ख पुस्तकयोर्नोपलभ्यते। 'संतते वर्ज्या' इति क ख।

त्वं विषमत्वं, तच्चात्र नास्ति। नैवम्, अस्यापि तथाभावात्। तथा च तल्लक्षणे चरकः— 'विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः। दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते' ( च. चि. अ. ३ ) इति। यत्तूक्तं खरनादेन—'ज्वराः पञ्च मयोक्ता ये पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः' इति; तत् सन्तते मुक्तानुबन्धित्वस्यैकदाभावित्वेनाल्पत्वान्न तद्व्यपदेशः, एकतण्डुलाभ्यवहारेऽनशनशब्दस्य व्यपदेशवत्, न हि तृतीयकादिवदावृत्त्या मुक्तानुबन्धित्वमस्येत्यभिप्रायेण द्रष्टव्यम्। अथवा विषमज्वरोल्लेखेन या चिकित्सोक्ता सा [1]'सन्ततवर्जं सततादिषु कार्येति प्रतिपादनार्थम्। हरिचन्द्रेणापि किल 'कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ' इति ( च. चि. अ. ३ ) चरकवचनाद्विषमज्वरोक्तचिकित्सा तृतीयकचतुर्थकयोरेव, अन्येषु दोषप्रत्यनीकचिकित्सा[2] कार्येत्यभिव्याख्यातम्। अस्यां हरिचन्द्रव्याख्यायां कर्म साधारणं सर्वत्रैव विषमज्वरे कार्यं, विशेषेण तृतीयकचतुर्थकयोरिति द्रष्टव्यम्; अन्यथोक्ततन्त्रान्तरविरोधः। 'अहोरात्रे सततको द्वौ कालावनुवर्तते' इति अह्नि द्वौ कालौ रात्रौ द्वौ कालौ वा; अह्नि एककालं रात्रावेककालमेवं वा; द्वौ कालौ—इतीशानदेवः, [3]नियमानभिधानात्तथा दर्शनाच्च। अनुवर्तते वेगं करोति। तृतीयेऽह्नि तृतीयक इति वेगादिनापेक्षया तृतीयेऽह्नि यो भवति स तृतीयको भवति, एवं चतुर्थकेऽपि वाच्यम् ॥ ३४–३५ ॥

**विमर्श.—सन्ततज्वर**—कई दिन तक लगातार चढ़ने वाले अविसर्गी ( Continuous ) स्वरूप ज्वर को सन्ततज्वर कहते हैं। इसकी दैनिक परिवृत्ति दो अंश तक होती है। यह मध्यकाल में स्वाभाविक अंश तक नहीं उतरता। आन्त्रिक ज्वर ( Typhiod ), फुफ्फुसपाक, ( Pneumonia ) तथा मस्तिष्क-सुषुम्नाज्वर (Ceredro–spinal fever) में सन्तत स्वरूप का ज्वर मिलता है। प्राचीन दृष्टि से आन्त्रिक ज्वर को पित्तोल्बण विषम सन्निपात ज्वर तथा फुफ्फुसपाक को श्लेष्मोल्बण विषम सन्निपात ज्वर, मस्तिक सुषुम्ना ज्वर को वातोल्बण विषम सन्निपातज्वर कह सकते है। इन ज्वरों का विस्तृत वर्णन आधुनिक चिकित्साग्रन्थों एव परिशिष्ट में किया गया है, ग्रन्थ की कलेवर वृद्धि के भय से उनका पूरा वर्णन करना यहाँ अपेक्षित नहीं है।

सन्तत ज्वर की सप्ताह आदि अवधि दोषभेद से की गई है अर्थात् वातोल्बण सन्तत ज्वर सात दिन में, पित्तोल्बण दस दिन मे तथा कफोल्बण बारह दिन में प्रायः उतर जाता है। कभी-कभी यह दीर्घकाल तक भी चलता है, अतएव चरक ने कहा है—

**विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः। दुर्लभोपशमः कालं दीर्घमप्यनुवर्तते ॥** (च. चि. ३)

**सततक ज्वर**—इस ज्वर में चौबीस घण्टे में दो बार ताप की वृद्धि होती है। इसका कभी किसी समय पूर्णतया मोक्ष भी हो सकता है और नहीं भी। इस प्रकार का ज्वर अधिकतर कालज्वर ( Kala Azar ) में पाया जाता है। (लीशमन डोनोवन बोडी (Leishman–donovan bodies ) के संक्रमण से कालज्वर ( परिशिष्ट में देखें ) उत्पन्न होता है। इसमें ज्वर, त्वग्वैवर्ण्य, यकृत् और प्लीहा की वृद्धि तथा मांसक्षय ये, लक्षण विशेषतया होते है। रोगी को भूख अच्छी लगती है, किन्तु पाचनशक्ति दुर्बल रहती है। कभी-कभी शोथ, अतिसार तथा नासिका और मसूड़ों से रक्तस्राव की प्रवृत्ति भी होती है। आरम्भ में ज्वर प्रायः पूर्णतया नहीं उतरता, किन्तु तापक्रम की वृद्धि दो बार होती है। कभी-कभी मारक विषमज्वर के जीवाणु ( plasmodium falciparum ) का उपसर्ग होने पर भी सतत स्वरूप का ज्वरवेग होता हैं। किन्तु इसमें किसी समय पूर्ण ज्वरमोक्ष की भी अवस्था मिलती है। इसे मलेरियल फीवर ही कहेंगे। जीवाणु तथा उसके सक्रमणकाल के भेद से आगन्तु ज्वरों में अन्येद्युष्क आदि भेद मिलते

१. अयं पाठः क ख पुस्तकयोर्नोपलभ्यते। 'सन्तते वर्ज्या' इति क ख।
२ 'कार्येत्यभिधाय व्याख्यातम्' इति क। ३. 'तृतीयमानानभिधानात्' इति क।

हैं। इसके अतिरिक्त निज विषमज्वरों में दोषप्रकोप के अनुसार उक्त भेद पाये जाते हैं। चरक ने इसका कारण बताते हुए कहा है—**अधिशेते यथा भूमिं बीजं काले प्ररोहति। अधिशेते तथा धातुं दोषः काले प्रकुप्यति ॥** ( च. चि. अ. ३ )

जिस प्रकार भूमि में पड़ा हुआ बीज समय पाकर ही अङ्कुरित होता है उसी प्रकार धातु में अवस्थित दोष या जीवाणु भी समय ( चौबीस घण्टा, अड़तालीस घण्टा या बहत्तर घण्टा इत्यादि ) पर प्रकुपित होकर ज्वर को उत्पन्न करता है। वेग का निश्चित काल समाप्त होने पर ज्वर शान्त हो जाता है और पुनः निश्चित समय पर ज्वर उत्पन्न होता है—**कृत्वा वेगं गतबलाः स्वे स्वे स्थाने व्यवस्थिताः। पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः ॥** ( च. चि. अ. ३ )

चक्रपाणि भी कहते हैं—'**सततकादौ दोषा वेगं कृत्वा गतबला भवन्ति, गतबलाश्च पुनः स्वे स्वे रक्तादौ स्थाने स्थिता भवन्ति, पुनस्त एव वृद्धाः स्वे काले ज्वरयन्ति**'।

रक्त धातु में लीन विषमज्वरोत्पादक जीवाणु जब लाल कणों को विदीर्ण करके बाहर आते हैं, तो शीत आदि लक्षणपूर्वक ज्वर का वेग आरम्भ होता है। विषमज्वर (मलेरिया) को उत्पन्न करने वाले जीवाणु विभिन्न प्रकार के होते हैं। इनके रक्तकण से बाहर आने का काल भी भिन्न होता है अतः ज्वरवेग भी विभिन्न समयों पर होता है। इसी कालभिन्नता के आधार पर विषमज्वर के तृतीयक आदि भेद होते हैं। इन जीवाणुओं की निम्न उपजातियाँ विभिन्न प्रकार के विषमज्वरों को उत्पन्न करती हैं—

१. प्लाज्मोडियम वाइवैक्स ( P. Vivax ) २. प्लाज्मोडियम ओवोल ( P. Ovale )
३. प्लाज्मोडियम मलेरिया (P. Malaria) ४. प्लोमोडियम फैल्सिपैरम (P. Falciparum)

इन जीवाणुओं के जीवन के निम्न दो चक्र हैं—

( १ ) **मैथुनीचक्रः**—इसमें नर और मादा दोनों की आवश्यकता नहीं होती है और यह चक्र मच्छरों के आन्त्र में पूर्ण होता है।

( २ ) **अमैथुनीचक्र**—इसमें नर और मादा की आवश्यकता नहीं होती। यह जीवनचक्र मनुष्य-शरीर में पूर्ण होता है।

प्लाज्मोडियम वाइवैक्स का जीवनचक्र ४८ घण्टे में पूर्ण होता है अतः लाल कण में प्रविष्ट हुए सम्पूर्ण अंशुकेत ( Merozites ) ४८ घण्टे के पश्चात् लालकण को विदीर्ण करके बाहर आते हैं। इस प्रकार जाति के जीवाणुओं का उपसर्ग होने पर प्रति तीसरे दिन ज्वर का वेग आया करता है। अत एव इस ज्वर को प्राचीनों ने तृतीयक नाम दिया है '**तृतीयकस्तृतीयेऽह्नि**' वा '**दिनं हित्वा तृतीयकः**'। प्लाज्मोडियम मलेरिया नामक उपजाति का जीवनचक्र ७२ घण्टे में पूर्ण होता है अतः लालकणों में लीन अंशुकेत ( Merozites ) उक्तकाल में रक्तकण को विदीर्ण करके बाहर आते हैं जिससे मध्य में दो दिन छोड़कर चौथे दिन ज्वर का वेग आता है। इसे चतुर्थक ज्वर (Quartan fever) कहते हैं—'**दिनद्वयं यो विश्रम्य प्रत्येति स चतुर्थकः**' ( च. चि. ३ )

**अन्येद्युष्क ज्वर** ( Quotidian ) प्रतिदिन चौबीस घण्टे में एक बार आता है और पूर्णविसर्गी स्वरूप का होता है। तृतीयकज्वर को उत्पन्न करने वाले प्लाज्मोडियम वाइवैक्स के दो स्वतन्त्र वंशविस्तार लगातार दो दिन होने से अन्येद्युष्क ज्वर होता है। इसे तृतीयक विपर्यय ( Double-tertian ) भी कह सकते हैं। तात्पर्य यह है कि किसी व्यक्ति को तृतीयक जीवाणु का उपसर्ग एक तारीख को हुआ और दूसरी तारीख को भी हुआ। जो कीटाणु प्रथम दिन शरीर में पहुँचे वे पंद्रह दिन के सञ्चयकाल ( Incubation period ) के पश्चात् १५, १७, १९ आदि तारीखों में ज्वर को उत्पन्न करेंगे। इसके अतिरिक्त दूसरी तारीख के उपसर्ग के फलस्वरूप १६, १८ और २० तारीखों में भी ज्वर होगा। इस प्रकार ज्वर का वेग प्रतिदिन आयेगा अतः इस दैनिक या

अन्येद्युष्क ज्वर कहते हैं। चतुर्थक कीटाणु के पृथक्-पृथक् लगातार दो उपसर्ग होने से दूसरे प्रकार का ज्वर उत्पन्न होता है उसे चतुर्थ विपर्यय कहते हैं। इसका वर्णन आगे (पृष्ठ ११५ पर) किया जायगा। इस प्रकार स्पष्ट है कि तृतीयक और चतुर्थ ही प्रधानतः विषमज्वर है। चरक ने भी कहा है—'कर्म साधारणं जह्यात् तृतीयकचतुर्थकौ।' इसी आधार पर हरिचन्द्र ने भी इन्हीं दोनों में विषमज्वर की विशिष्ट चिकित्सा करने का निर्देश किया है।

(सन्ततज्वर विषमज्वर है या नहीं? इसका विवेचन पृष्ठ १०६ पर देखें)

विषमज्वरस्याऽऽगन्तुकारणतां प्राह—

**केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥ ३६ ॥ (सु. उ. अ. ३९)**

कतिपय विद्वान् विषम ज्वर को भूत (जीवाणु) संक्रमणजन्य मानते हैं ॥ ३६ ॥

**विषमज्वरस्यैकीयमतेन भूताभिषङ्गजत्वमाह—केचिदित्यादि। परवचनमप्रतिषिद्धमनुमतं सुश्रुतेन; अत एव विषमज्वरे दैवव्यपाश्रयं बलिहोमादि भूतोचितं, युक्तिव्यपाश्रयं कषायपानादि दोषोचितं च विधीयते। यदाह चरकः—'कर्म साधारणं जह्यात्तृतीयकचतुर्थकौ। आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे' इति (च. चि. अ. ३)। अत्र साधारणमिति दैवयुक्तिव्यपाश्रयमिति व्याख्यात इति ॥ ३६ ॥**

**विमर्श**—सुश्रुत ने एकीय मत के द्वारा विषम ज्वर को भूतसंक्रमणजन्य बताया है। उक्त कथन से यह स्पष्ट है कि प्राचीन काल में भी विषम ज्वर को संक्रामक व्याधि मानने वाले विद्वानों का एक वर्ग रहा है। सुश्रुत में इस वाक्य का खण्डन उपलब्ध न होने से यह भी निर्विवाद है कि सुश्रुत स्वयं भी इस मत से सहमत थे क्योंकि **'परवचनमप्रतिषिद्धमनुमतं भवति'** अर्थात् परपक्ष के वचन का खण्डन न होने पर वह स्वीकार्य माना जाता है, यह नियम भी इसमें प्रमाण है। चरक भी इसे प्रायः आगन्तुज (भूताभिषङ्गज) मानते हैं।

उल्बणदोषभेदेन तृतीयकचतुर्थकज्वरयोर्लक्षणभेदं निरूपयति—

**कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।**
**वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ३७ ॥**

तृतीयक ज्वर तीन प्रकार का होता है। कफपित्तोल्बण तृतीयक ज्वर में प्रथम त्रिक प्रदेश पीडित होता है तत्पश्चात् ज्वर का वेग होता है। इसी प्रकार वातकफोल्बण में प्रथम पृष्ठ और वातपित्तोल्बण में प्रथम शिरःप्रदेश में वेदना होती है ॥ ३७ ॥

**चतुर्थको दर्शयति प्रभावं द्विविधं ज्वरः।**
**जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरस्तोऽनिलसंभवः ॥ ३८ ॥**

**(च. चि. अ. ३)**

चतुर्थक ज्वर का प्रभाव भी दो प्रकार से प्रकट होता है। श्लेष्मोल्बण चतुर्थक ज्वर पहिले जंघाओं को पीडित करता हुआ ज्वर में वेग उत्पन्न करता है। वातोल्बण चतुर्थक ज्वर में प्रथम शिर में वेदना होती है तत्पश्चात् ज्वर का वेग व्यक्त होता है ॥ ३८ ॥

**उल्बणदोषभेदेन तृतीयकचतुर्थकयोर्लक्षणान्तरमाह—कफपित्तादित्यादि। त्रिकग्राही वेदनया त्रिकव्यापी, त्रिकस्य वातस्थानत्वेन तद्गतौ पित्तकफावन्यस्थानगतत्वेन दुर्बलौ तृतीयदिने वेगं कुरुतः, यदि तु स्वस्थानस्थितौ स्यातां तदा सन्ततज्वरमेव कुर्यातामिति जेज्जटः। एवं शिरसि कफस्थाने, पृष्ठे च पित्तस्थाने बोद्धव्यम्। पृष्ठादिति ल्यब्लोपे कर्मणि पञ्चमी, पृष्ठं वेदनया व्याप्येत्यर्थः। न च वाच्यं यदि त्रिकं वातस्थानं तत् कथं तत्र पित्तकफाविति; प्रकृतिस्थानां दोषाणां स्थाननियमो न तु प्रकुपितानां, तेषां सर्वदेहगतत्वात्। यदाह सुश्रुतः-'कुपितानां हि दोषाणां शरीरे परिधावताम्। यत्र सङ्गः खवैगुण्याद्व्याधि-**

स्तत्रोपजायते' इति ( सु. सू. अ. २४ )। एवमन्यस्थानगतत्वेन दोषदौर्बल्यादि चतुर्थकेऽपि वाच्यम्। प्रभावं रुजारूपां शक्तिम्। द्विविधं विवृणोति—जङ्घाभ्यामित्यादि। जङ्घाभ्यां शिरस्त एतच्च पञ्चमीद्वयं पूर्ववत्। पूर्वमिति प्रथमं, तत्र भूत्वा निखिलं देहं व्याप्नोति। श्लैष्मिक इति श्लेष्मोल्बणः, सन्ततसततकान्येद्युष्कतृतीयकचतुर्थकानां पञ्चानां सान्निपातिकत्वात्। यदुक्तं चरके-'प्रायशः सन्निपातेन दृष्टः पञ्चविधो ज्वरः। सन्निपाते तु यो भूयान् स दोषः परिकीर्तितः' ( च. चि. अ. ३ ) इति। अथवा प्रायोग्रहणादेकदोषजा द्विदोषजा अपि भवन्ति। अन्ये त्वाहुः—विकृतिविषमसमवायारब्धाः सन्ततादयः सन्निपातजाः, तेषामेवोद्धूतदोषेण व्यपदेशः, प्रकृतिसमसमवायारब्धास्तु एकदोषजद्विदोषजा अपि भवन्तीति जेज्जटः। प्रकृतिसमसमवायारब्धश्चतुर्थकस्तु पित्तेन न क्रियत एव, व्याधिस्वभावात्; पित्तजगलगण्डवत्। ननु अस्ति पैत्तिकोऽपि चतुर्थकः, तथा हरिताचार्यो व्याहरति-'चतुर्थको नाम गदो दारुणो विषमज्वरः। शोषणः सर्वधातूनां बलवर्णाग्निनाशनः॥ त्रिदोषजो विकारः स्यादस्थिमज्जगतोऽनिलः। कुपितं पित्तमेवं तु कफश्चैवं स्वभावतः॥ शीतदाहकरस्तीव्रस्त्रिकालं चानुवर्तते। सन्निपातसमुद्भूतो विषमो विषमज्वरः॥ ऊर्ध्वं कायस्य गृह्णाति यः पूर्वं सोऽनिलात्मकः। पूर्वं गृह्णात्यधः कायं श्लेष्म वृद्धश्चतुर्थकः-' इति। अत्राहुः—अनुबन्धरूपमत्र पित्तं, न त्वारम्भकं; कथमेषा प्रतीतिरिति चेत्, स्थानविशेषानभिधानात्; अत एव हारीतेनापि नोदाहृतमेव जङ्घादिवदिति चरकटीकाकृतो व्याचक्षते। कस्त्वेषा व्याख्या तदा संगच्छते यदि पित्तलिङ्गं नोद्भूतं दृश्यते, दृश्यते च; तथा कथ्यते-भेडेऽपि पैत्तिकः पठ्यते-'आमाशयस्थः पवनो ह्यस्थिमज्जगतोऽपि वा। कुपितः कोशयत्याशु श्लेष्माणं पित्तमेव च' इति। किंच नागभर्तृतन्त्रे। स्थानमप्युक्तमेव-ऊर्ध्वकायं तु यः पूर्वं गृह्णाति सोऽनिलात्मकः। मध्यकायं तु गृह्णाति पूर्वं यस्तु स पित्तजः॥ पूर्वं गृह्णात्यधःकायं श्लेष्म वृद्धश्चतुर्थकः' इति। तस्मात् प्रायेण कफवाताभ्यां भवतीति पैत्तिकश्चतुर्थकश्चरकादिभिर्नोदाहृतः, न त्वसंभवादिति मन्तव्यम्। एषां चोत्पत्तिक्रमो वृद्धसुश्रुतादवगन्तव्यः। तदाह-'अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। ततश्चामाशयं प्राप्य करोति विषमज्वरम्॥ कफस्थानविभागे यथासंख्यं करोति हि। सततान्येद्युष्कत्र्याख्यचतुर्थान् सप्रलेपकान्' ( सु. उ. अ. ३९ ) इति। अस्यायमर्थः—आमाशयहृदयकण्ठशिरःसन्धयः पञ्च कफस्थानानि, एषु स्थितैर्दोषैर्यथासंख्यं सततादयः क्रियन्ते। तत्रामाशयस्थितेन दोषेण सततकः क्रियते द्विकालं न च सर्वदा; न चामाशयप्राप्तौ सर्वदा प्रसङ्गः, अहोरात्रेषु कालेषु स्वप्रकोपकालापेक्षया ज्वरोत्पत्तेः। हृदयस्थितेन दोषेणामाशयमागत्यान्येद्युष्कः क्रियते एककालं, न च सर्वदा, सततारम्भकदोषापेक्षयाऽस्य व्यवहितत्वात्। कण्ठस्थितेन दोषेणैकस्मिन् दिने हृदयमागम्यते, अपरस्मिन्नामाशयमागत्य ज्वर आरभ्यते तृतीयकः। एवं शिरःस्थितेन दोषेण कण्ठहृदयामाशयान् त्रिभिर्दिनैः क्रमेण प्राप्य चतुर्थकः क्रियते। पुनः स्वस्थानगमनं तु दोषाणां हृतवेगत्वेन लाघवाद्वेगदिन एव भवति। सन्धिस्थितेन दोषेण प्रलेपकः क्रियते, सन्धयश्चामाशयेऽपि सन्तीति स सर्वदा भवति[1]। अयं चाविषमोऽपि विषमसहचरितः पठितः, कफस्थानोत्पादानुरोधात्। उक्तं हि सुश्रुते-'प्रलेपकस्त्वविषमः प्रातः क्लेशाय शोषिणाम्' इति ( सु. उ. अ. ३९ )॥ ३७–३८॥

विमर्शः—त्रिक प्रदेश वायु का प्रधान स्थान है। जब त्रिकप्रदेशस्थित वायु कफ और पित्त से विगुण हो जाती है तभी कफपित्तोल्बण विषमज्वर में प्रथम त्रिक प्रदेश में पीड़ा होती है। पित्त और कफ वातस्थान में पहुँचने से कुछ दुर्बल हो जाते हैं अतएव ज्वर का वेग तीस दिन

१. 'सर्वेषु कफस्थानेषु व्यवस्थितो दोषः सततं करोतीति ज्ञेय, तन्त्रान्तरोक्तत्वात्'—इति वृन्दटीकायां श्रीकण्ठदत्तः।

आता है। यदि वे अपने स्थान पर स्थित रहें तो ज्वर सन्तत या सततक स्वरूप का ही होगा। इसी प्रकार शिर में स्थित स्वाभाविक कफ के वात तथा पित्त से शुष्क होकर ललाट आदि की कोटरों में एकत्रित हो जाने से वात पित्तोल्वण विषमज्वर में प्रथम शिरोवेदना होती है। इन दोषों के भी अन्यस्थानगत होने से ज्वरवेग तीसरे दिन आता है। ये दोष अन्यस्थानगत कैसे हो जाते हैं यह शंका करना भी निर्मूल है; क्योंकि प्रकृतिस्थ दोषों का ही स्थान निश्चित रहता है। प्रकुपित दोषों का नहीं। 'प्रकुपित दोष तो सर्वशरीर में विचरण करते हैं और अनुकूल परिस्थिति पाकर जहाँ उनका मार्ग में अवरोध होने से अवस्थान हो जाता है वहीं विकार की उत्पत्ति हो जाती है। सुश्रुत ने कहा भी है—

**'कुपितानां हि दोषाणां शरीरे परिधावताम्। यत्र संगः खवैगुण्याद्व्याधिस्तत्रोपजायते ॥'**

प्रथम त्रिक आदि की वेदना के ज्ञान से चिकित्सा में सौकर्य होता है। यथा त्रिकवेदना का ज्ञान होने पर विरेचन, पृष्ठवेदना का ज्ञान होने पर वात तथा कफ के विलयन के लिए स्वेद और प्रथम शिर की वेदना का ज्ञान होने पर स्नेहन एवं शिरोविरेचन जैसी क्रियाओं का करना भी सुगम हो जाता है। श्लेष्मोल्वण तथा वातोल्वण भेद से चतुर्थक ज्वर दो प्रकार होता है। इससे पित्तोल्वण चतुर्थक ज्वर नहीं होता यह स्पष्ट है। कुछ लोगों का कहना है कि यह पित्तोल्वण भी होता है; क्योंकि हारीत ने कहा है—**चतुर्थको नाम गदो···श्लेष्मवृद्ध-श्चतुर्थकः** ॥ ( पूरा श्लोक मधुकोश में देखें )

यहाँ वात और कफ के समान पित्तप्रकोप का भी वर्णन किया है। किन्तु यहाँ पित्त अनुबन्ध रूप ही हैं, वात और कफ के समान आरम्भक नहीं, क्योंकि पित्त का इतर दो दोषों के समान स्थाननिर्देश नहीं किया गया है। हारीत ने भी **'ऊर्ध्वं कायस्य'** इत्यादि श्लोक के द्वारा केवल वातोल्वण और कफोल्वण चतुर्थक का ही वर्णन किया है, पित्तोल्वण का नहीं। यह चरक के टीकाकारों का मत है। वस्तुतः पित्त के लक्षण चतुर्थक में भी व्यक्त होते हैं अतएव भेल ने पैत्तिक चतुर्थक का भी वर्णन किया है—

**आमाशयस्थः पवनो ह्यस्थिमज्जगतोऽपि वा। कुपितः कोपयत्याशु श्लेष्माणं पित्तमेव च ॥**

नागभर्तृतन्त्र में पित्तोल्वण के स्थान का भी निर्देश किया गया है—

**मध्यकायं तु गृह्णाति पूर्वं यस्तु स पित्तजः।**

प्रायः कफोल्वण तथा वातोल्वण चतुर्थक ही पाये जाते हैं पित्तोल्वण कादाचित्क है, इसी आशय से चरक आदि ग्रन्थों में पैत्तिक के वर्णन का अभाव है असम्भव होने से नहीं।

पूर्वोक्त विभिन्न धातुगत दोषों के द्वारा सततादि ज्वरों की उत्पत्ति के अतिरिक्त वृद्ध सुश्रुत ने इन सब ज्वरों की उत्पत्ति का क्रम निम्न प्रकार से बताया है—

**अहोरात्रादहोरात्रात् स्थानात् स्थानं प्रपद्यते। ततश्चामाशयं प्राप्य करोति विषमज्वरम् ।**
**कफस्थानविभागेन यथासंख्यं करोति हि। सन्ततान्येद्युष्कत्र्याख्यचतुर्थान् सप्रलेपकान् ॥**
( सु. उ. तं अ. ३९ )

अर्थात्—आमाशय, हृदय, सिर, कण्ठ और सन्धि ये पाँच कफ के स्थान हैं। इनमें स्थित दोषों के अनुसार विभिन्न प्रकार के ज्वर उत्पन्न होते हैं। जब दोष आमाशय में स्थित रहता है तो सततक स्वरूप का ज्वर होता है। ( अब यहाँ सन्देह होता है कि दोष के आमाशय में सर्वदा रहने से ज्वर सन्ततस्वरूप का होना चाहिये ? इस पर कहते हैं कि जिस दोष की उल्वणता से ज्वर उत्पन्न होता है उसका प्रकोपकाल दिन रात में दो बार ही होता है अतः प्रकोपकाल के अनुसार ज्वरवेग भी चौबीस घण्टे में दो बार ही होता है।) हृदयस्थित दोष एक दिन में आमाशय में पहुँचता है इसलिये २४ घण्टे में एक बार ही ज्वर का वेग आता है सर्वदा नहीं। कण्ठ में स्थित दोष एक दिन में हृदय में आता है और दूसरे दिन आमाशय में पहुँचकर तृतीयक

ज्वर को उत्पन्न करता है। इसी प्रकार शिरःस्थित दोष तीन दिन में कण्ठ, हृदय और आमाशय में पहुँच कर चतुर्थक ज्वर को उत्पन्न करता है। वेग समाप्त होने पर दोष शीघ्र उसी दिन अपने अपने स्थान पर चले जाते हैं और पुनः प्रबल होकर वेग को करते हैं। चरक ने कहा भी है—

**कृत्वा वेगं गतबलाः स्वे स्वे स्थाने व्यवस्थिताः। पुनर्विवृद्धाः स्वे काले ज्वरयन्ति नरं मलाः॥**

सन्धिस्थित दोष प्रलेपकज्वर को उत्पन्न करता है। आयुर्वेदमतानुसार सन्धियाँ आमाशय में भी हैं अतः ज्वर सन्ततस्वरूप का रहता है। वस्तुतः एक साथ सभी कफ स्थानों में दोष की स्थिति रहने से ही सन्ततस्वरूप का ज्वर होता है केवल आमाशयस्थित होने से नहीं, अन्यथा सततक भी सदा रहता। नित्यानुबन्ध होने से विषमज्वर की श्रेणी में न होते हुए भी कफस्थान से उत्पत्ति के साम्य से प्रलेपक का वर्णन भी विषमज्वर के साथ कर दिया गया है। किन्तु सुश्रुत ने स्पष्टरूप से इसे विषमज्वर से पृथक् माना है—'प्रलेपकस्त्वविषमः प्रायः क्लेशाय शोषिणाम्'।

विषमज्वरभेदं चतुर्थकविपर्ययं व्याचष्टे—

**विषमज्वर एवान्यश्चतुर्थकविपर्ययः।**
**स मध्ये ज्वरयत्यह्नी आदावन्ते च मुञ्चति॥ ३९॥**

( च. चि. अ. ३ )

चतुर्थक विपर्यय भी विषमज्वर का ही एक भेद है। इसमें मध्य में दो दिन लगातार ज्वर आता है और इन दो दिन के पूर्व तथा अन्त के दिन ज्वर नहीं रहता है॥ ३९॥

चतुर्थकविपर्ययमाह—विषमेत्यादि। अत्र तन्त्रान्तरम्—'अस्थिमज्जोभयगते चतुर्थकविपर्ययः। स मध्ये ज्वरयत्यह्नी आदावन्ते च मुञ्चति'। इति। आदावेकदिनं मुक्त्वा, मध्ये दिनद्वयं भूत्वा, अन्ते एकदिनं न भवतीति व्याचक्षते जेज्जटादयः। अस्थिमज्जोभयगते चतुर्थकविपर्ययः। त्र्यहाद्[1] द्व्यहं ज्वरयत्यादावन्ते च मुञ्चति'—इति पराशरवचनस्यापि स एवार्थः; त्र्यहादिति त्र्यहस्यादिदिनं विमुञ्चति, दिनद्वयं ज्वरयति, त्र्यहस्यान्ते चतुर्थदिनं मुञ्चतीति तात्पर्यार्थं व्याचक्षते। हरिचन्द्रस्त्वाह—द्वे अहनी निरन्तरं ज्वरयित्वा उपरस्यैकमहः पुनर्ज्वरयतीत्येवं चतुर्थकविपर्यय इति। आदिदिनाभावश्चोत्तरोत्तरपातिदिवसेष्ववधार्यः। चतुर्थकविपर्ययस्योपलक्षणत्वेन तृतीयकादिविपर्ययोऽप्यूह्य इत्याहुः। तद्यथा—मध्ये एकदिनं ज्वरयति, आद्यन्तयोर्मुञ्चतीति तृतीयकविपर्ययः; एककालं विमुच्य सर्वमहोरात्रं व्याप्नोतीत्यन्येद्युष्कविपर्ययः; ( कालद्वये मुञ्चति, सर्वमहोरात्रं ज्वरयतीति सततकविपर्ययः[2]। ) अत्र दोषविकृतिरेव नानाविधा हेतुरिति। 'कफस्थानेषु वा तिष्ठन् दोषो द्वित्रिचतुर्षु च। विपर्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान्' ( सु. उ. अ. ३९ ) इति वृद्धसुश्रुतवाक्यं व्याचक्षाणो जेज्जटोऽन्येद्युष्कतृतीयकचतुर्थकमात्रस्य विपर्ययमुदाहरति। यद्यथा—आमाशयहृदयस्थदोषेण यथोदाहृत एवान्येद्युष्कविपर्ययः; आमाशयहृदयकण्ठस्थितेन तृतीयकविपर्ययः, तत्रैकस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य तत्स्थेन सह ज्वरयति तद्दिने कण्ठस्थितश्च हृदयमायाति, अपरदिने सोऽप्यामाशयमागत्य ज्वरयति, एवं दिनद्वयं भूत्वा पश्चादेकदिनं न भवतीति तृतीयकविपर्ययः, आमाशयहृदयकण्ठशिरःस्थेन दोषेण चतुर्थकविपर्यय इति तत्र यस्मिन् दिने हृदयस्थो दोष आमाशयमागत्य ज्वरयति तस्मिन् दिने कण्ठस्थो हृदयं शिरस्थश्च कण्ठमायाति; अपरदिने हृदयस्थ आमाशयमागत्य ज्वरयति कण्ठस्थितश्च

१. 'त्र्यहाद द्व्यहं ज्वरयति' मातृकदर्पणसमतः पाठः।

२. अयं पाठः क-ख पुस्तकयोर्नोपलभ्यते।

**हृदयमायाति, अपरदिने हृदिस्थ एवामाशयमागत्य ज्वरयति, एवं दिनत्रये भूत्वा पश्चादेकदिनं न भवतीति चतुर्थकविपर्यय इति । एते च सर्वे एव ज्वरा न विरुद्धाः, सर्वेषामेव मुनिप्रणीतत्वात् । यथोक्तं** स्मृतिशास्त्रे-**'स्मृतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ मतौ'** ( म. स्मृ. अ. २ श्लो. १४ ) **इति । दृश्यन्ते च नानाविधा एव विषमज्वराः, एष एव न्यायश्चरकसुश्रुतयोः कुष्ठवैशम्ये** वाप्यचन्द्रेण **दर्शितः; न वा चिकित्साभेदोऽप्येषामुक्तः; यैव तृतीयकादौ चिकित्सा सैव तद्विपर्ययेऽपीति ॥ ३९ ॥**

**विमर्श :**—दोष के अस्थि तथा मज्जा दोनों में अवस्थित होने पर चतुर्थक विपर्यय होता है—**'अस्थिमज्जोभयगते चतुर्थकविपर्ययः । त्र्यहाद् द्व्यहं ज्वरयत्यादावन्ते च मुञ्चति'** । चतुर्थक विपर्यय का चक्र भी तीन दिन का ही होता है । इसमें एक दिन छोड़कर दो दिन निरन्तर ज्वर बना रहता है । जब दोष अधिक रहता है अथवा चतुर्थक के कीटाणु का लगातार दो दिन उपसर्ग होता है तो चतुर्थक विपर्यय पाया जाता है । यथा जो कीटाणु एक तारीख को शरीर में पहुँचे वे २० दिन के संचयकाल के पश्चात् २०, २३, २६, २९ आदि दिनांकों में ज्वर को उत्पन्न करेंगे । इसी प्रकार जो किटाणु २ दिनांक को प्रविष्ट हुए उनके कारण २१, २४, २७; तथा ३० दिनांकों में भी ज्वर का वेग आयेगा । अतः इस चतुर्थक के जीवाणु से ही दो सज्वर दिन और एक निर्ज्वर दिन होगा । इसे चतुर्थक विपर्यय ( Double quartan ) कहते हैं ।

कतिपय विद्वान् चतुर्थक विपर्यय के समान तृतीयक, अन्येद्युष्क तथा सततक का विपर्यय भी मानते हैं । उनका तात्पर्य है कि आदि और मध्य के दिनों को छोड़कर मध्य में एक दिन ज्वर का आना तृतीयक विपर्यय है । दिन रात के किसी एक काल को छोड़कर शेष सब समय में ज्वर का बना रहना अन्येद्युष्क-विपर्यय और दिन रात के दो समय को छोड़कर शेष चार समय-में ज्वर के वेग का रहना सततक विपर्यय है । इन विपर्ययों का कारण नाना प्रकार की दोष-विकृति ही है—

**कफस्थानेषु वा तिष्ठन् दोषो द्वित्रिचतुर्षु च । विपर्ययाख्यान् कुरुते विषमान् कृच्छ्रसाधनान् ॥**

उक्त श्लोक की व्याख्या करते हुए जेज्जट अन्येद्युष्क, तृतीयक तथा चतुर्थक के विपर्ययों का विवेचन निम्न प्रकार से करते हैं—

आमाशय तथा हृदय दोनों में दोष का अवस्थान होने से अन्येद्युष्क विपर्यय होता है । आमाशय, हृदय तथा कण्ठस्थित दोष से तृतीयक विपर्यय होता है । जिस दिन हृदयस्थ दोष आमाशय में पहुँचकर ज्वर उत्पन्न करता है, उसी दिन कण्ठस्थित दोष हृदय में आ जाता है और दूसरे दिन वही आमाशय में पहुँचकर पुनः ज्वरवेग प्रारम्भ करता है । इस प्रकार दो दिन ज्वर होकर एक दिन नहीं होता इसको ही तृतीयक विपर्यय कहते हैं । आमाशय, हृदय, कण्ठ तथा सिर में स्थित दोष से चतुर्थक विपर्यय होता है । प्रथम दिन हृदयस्थ दोष आमाशय में पहुँच कर ज्वर उत्पन्न करता है, उसी दिन कण्ठस्थ दोष हृदय में और शिरस्थ दोष कण्ठ में आ जाता है । दूसरे दिन पुनः हृदयस्थ दोष आमाशय में पहुँचकर ज्वरवेग प्रारम्भ करता है और उसी दिन कण्ठस्थदोष हृदय में पहुँच जाता है । इस प्रकार तीसरे दिन भी हृदयस्थ दोष आमाशय में पहुँचकर ज्वर को उत्पन्न करता है । तीन दिन लगातार ज्वरितावस्था रहती है और एक दिन के लिये रोगी विज्वर होता है, इसको जेज्जटमतानुसार चतुर्थक, विपर्यय कहते हैं । ज्वर के उक्त सब प्रकार असिद्ध नहीं है; क्योंकि सबका वर्णन शास्त्र में मिलता है । जहाँ दो आप्त वाक्यों में भेद प्रतीत हो वहाँ दोनों को ही प्रमाण मानकर समाधान कर लेना चाहिये । स्मृतिशास्त्र में कहा भी है:—**'स्मृतिद्वैधं तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।'** विषम ज्वरों के अनेक प्रकार मिलते भी हैं ।

वस्तुतः अन्येद्युष्क आदि विपर्यय का स्वीकार करना व्यर्थ है; क्योंकि उनमें कोई स्पष्ट भेद नहीं है। यथा अन्येद्युष्क विपर्यय में ज्वर का वेग २४ घण्टे में एक बार ही आता है. केवल दोष की अधिकता के कारण वह अधिक काल तक रहता है, वेग की दृष्टि से अन्तर न होने के कारण इसे भिन्न न समझना चाहिये। इसी प्रकार सततक विपर्यय में वेग तो दो ही बार आता है, उसकी वेगस्थिति ही दीर्घकाल पर्यन्त रहती है। तृतीयक और तृतीयक विपर्यय में कोई अन्तर ही नहीं है, केवल नाम का भेद है। जेज्जट द्वारा प्रतिपादित तृतीयक विपर्यय भी चरकोक्त चतुर्थक विपर्यय ही है। चतुर्थक विपर्यय तो सर्वमान्य है। अन्तर केवल इतना है कि चरक ने दो दिन ही ज्वरवेग की प्रवृत्ति मानी है जब कि जेज्जट इसे तीन दिन मानते हैं। दोनों ही प्रकार ठीक हो सकते हैं। इसके अतिरिक्त तृतीयक विपर्यय आदि की चिकित्सा भी तृतीयक आदि से भिन्न नहीं है अतः उनका पृथक् स्वीकार करना निष्प्रयोजन ही है।

**वातबलासकज्वरं निरूपयति—**

**नित्यं मन्दज्वरो रूक्षः शूनकस्तेन सीदति।**
**स्तब्धाङ्गः श्लेष्मभूयिष्ठा नरो वातबलासकी॥ ४०॥**

( अ. सं. नि अ. २ )

वातबलासक नामक ज्वर से पीड़ित रोगी को नित्य मन्दज्वर रहता है, उसकी त्वचा में रूक्षता तथा अङ्गों में शोथ रहता है। रोगी को अवसाद रहता है और अङ्ग जकड़े रहते हैं। यह ज्वर श्लेष्मोल्वण होता है॥ ४०॥

**उक्तसंगत्या प्रलेपकादनुपद्रवत्वेन तत्सधर्मिणी वातबलासके वाच्ये प्रतिलोमतन्त्रयुक्त्या वातबलासकमेवाह—नित्यमित्यादि। वातबलासकाख्यो ज्वरोऽस्यास्तीति वातबलासकी नरः, तेन ज्वरेण, शूनकः शोथी, सीदति अवसन्नो भवति; शोथिनः स उपद्रव इत्यर्थः। शूनः कृच्छ्रेण सिध्यति' इति पाठान्तरे 'तेन' इति शेषः। वातबलासमेके कुम्भाह्वयपाण्डुरोगविपर्ययमाहुरिति गदाधरः[२]। वातबलासकारब्धत्वाद्वातबलासकः; बलासकः श्लेष्मा, पित्तमप्यत्र बोद्धव्यम्। यदुक्तं तन्त्रान्तरे—'वायुः प्रकुपितो दोषावुदीर्योभौ विधावति। स शिरस्थः शिरःशूलम्"—इत्यादि। यच्चोक्तं सुश्रुतेन—"प्रलेपकं वातबलासकं वा कफाधिकत्वात् प्रवदन्ति तज्ज्ञाः' (सु. उ. अ. ३९)—इति। तत्तु श्लेष्मणो नित्यानुषक्तत्वेनेति जेज्जटः। रूक्षत्वं चास्य वातपित्ताभिभूतत्वात् कफस्नेहस्य, व्याधिप्रभावाद्वेति॥ ४०॥**

**विमर्श**—वात का अर्थ वायु और बलास का अर्थ कफ है। इस प्रकार वातबलासक ज्वर वातकफोल्वण होते हुए भी त्रिदोषज ही है, क्योंकि इसमें पित्त की भी सत्ता रहती है यह तन्त्रान्तर के वचन से सिद्ध है—**वायुःप्रकुपितो दोषावुदीर्योभौ विधावति। सशिरःस्थः शिरःशूलम्...**

यहां पर प्रकुपित वायु के द्वारा कफ और पित्त दोनों की विकृति का निर्देश किया गया है। कफ का स्नेहगुण वात और पित्त के द्वारा अभिभूत हो जाता है अतः इसमें त्वचा रूक्ष रहती है। रोगी के किसी एक अङ्ग या सर्वाङ्ग में शोथ पाया जाता है। सर्वप्रथम यह शोथ मुख या शाखाओं में दिखाई पड़ता है। नीचे से प्रारम्भ होकर क्रमशः ऊपर की ओर बढ़ता जाता है। दुर्बलता तथा पीड़ा के कारण रोगी अङ्गों को इतस्ततः नहीं चला पाता अतः उसे स्तब्धाङ्ग विशेषण दिया गया है। हृदय की दुर्बलता उत्तरोत्तर शरीर का बलनाश होने से रोगी को अवसाद सा रहता हैं। श्लेष्मा की प्रधानता होने से लालास्राव, शीत, कास तथा श्वास जैसे कफ के उपद्रव भी पाये जाते हैं। रोग अधिक बढ़ जाने पर फुफ्फुस में शोथ भी पाया जाता है।

कतिपय विद्वान् इसको वातभूयिष्ठ मानते है। वस्तुतः यहां वायु को प्रेरक मानकर ही

---

१. 'भवेद वातबलासकी' इति पाठान्तरम्। १. 'गयदास' इति ग। 'कन्दज्वरत्व' क ख।

प्रधानता दी गयी है । वायु से प्रेरित श्लेष्मा से उत्पन्न होने के कारण इसे श्लेष्मभूयिष्ठ माना गया है । इसलिये कोई दोष नहीं आता ।

यह रोग आनूप देश में रहने वाले तथा विशेषतया चावल का सेवन करने वाले लोगों में पाया जाता है । लक्षणों के अनुसार आधुनिक दृष्टि से इस रोग को जानपदिक शोथ ( Epidemic dropsy ) नाम दिया जा सकता है । कतिपय विद्वान् इसे बेरी-बेरी भी मानते हैं । वस्तुतः बेरी-बेरी में ज्वर का लक्षण नहीं होता जब कि मन्द ज्वर रहना इसका प्रधान लक्षण है । अतः इसे बेरी-बेरी नाम देना सर्वथा अनुपयुक्त है । वातबलासक या जानपदिक शोथ और बेरी-बेरी में निम्न अन्तर है—

| वातबलासक | बेरी-बेरी |
|---|---|
| १–ज्वर होता है । | १–ज्वर नहीं होता । |
| २–परिसरीय नाड़ियों पर प्रभाव नहीं होता । | २–इन नाड़ियों पर प्रभाव होता है । |
| ३–ग्लुकोमा हो जाता है । | ३–नहीं होता । |
| ४–गर्भस्थ शिशु में यह सक्रान्त नहीं होता । | ४–गर्भस्थ शिशु में यह सक्रान्त हो जाता है । |

शोथ, हृद्दौर्बल्य, दृष्टिक्षय, ज्वर तथा कफज लक्षण इसमें विशेषतया होते हैं । रोगाक्रमण के एक सप्ताह बाद धातुओं में द्रव के संचय से शोथ प्रारम्भ हो जाता है । यह गुल्फसन्धि से प्रारम्भ होकर धीरे-धीरे ऊपर बढ़कर सर्वशरीरव्यापी भी हो जाता है काम करने या चलने-फिरने से यह शोथ अधिक होता है, अतः सायंकाल के समय अधिक स्पष्ट प्रतीत होता है और प्रातःकाल में कम । द्रव धीरे-धीरे फुफ्फुसावरण तथा हृदयावरण में भी संचित होने लगता है जिससे फुफ्फुस और हृदय की विकृति के लक्षण व्यक्त होते हैं । इससे रोगी सदा अवसादित (Depressed) एवं बलहीन रहता है । ज्वर मन्द ही रहता है । लगभग ९८.६ से ९९.४ डिग्री तक तापक्रम होता है । हृदय पर प्रभाव होने से हृद्द्रव ( Tachycardia ) तथा श्वास की मन्दता हो जाती है ।

प्रलेपकज्वरं लक्षयति—

**प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च ।**
**मन्दज्वरविलेपी च सशीतः स्यात् प्रलेपकः ॥ ४१ ॥**

**( अ. सं. नि. अ. २ )**

गौरव तथा पसीने से शरीर को लिप्त करनेवाला शीतयुक्त मन्दज्वर प्रलेपक कहलाता है ॥४१॥

**प्रलेपकमाह—प्रलिम्पन्नित्यादि । मन्दज्वरश्चासौ विलेपी चेति मन्दज्वरविलेपी विलेपित्वं[1] चास्य यस्माद्धर्मगौरवाभ्यां लिम्पति संवध्नातीत्यर्थः । अयं च कफपित्तजः । यदुक्तं सुश्रुतेन'प्रलेपकं वातबलासकं च' ( सु. उ. अ. ३९ ) इत्यादि । तथा चरमपि 'ज्वरो दाहोऽतिसारश्च पित्तात् कफस्य चागमः' ( सु. उ. अ. ४१ ) इत्युक्तं, चरमपि चायं भवतीति । अन्ये तु त्रिदोषजयचमजनितत्वेन त्रिदोषज एवायम्, उद्भूतत्वेन तु कफपित्तव्यपदेशः॥४१॥**

**विमर्श**—यह प्रच्छन्न रूप से सदैव बने रहने हुए भी प्रत्यक्षतः विसर्गी स्वरूप का ज्वर है । प्रतिदिन मध्याह्नोत्तर या सन्ध्याकाल में यह चढ़ता है । इसमें ठण्डा पसीना आता है जिससे रोगी का शरीर लिप्त हो जाता है । इसीलिए कुछ लोग इसे विषम ज्वर भी मानते हैं । किन्तु सुश्रुत ने स्पष्टतः इसे अविषम कहा है । आजकल इसे हैक्टिक फीवर (Hectic fever) कहते हैं । यह राजयक्ष्मा का प्रधानलक्षण है । प्राचीनों ने इसे राजयक्ष्मा का लक्षण माना है—

**'प्रलेपकस्त्वविषमः प्रायः क्लेशाय शोषिणाम् । तथा प्रलेपको ज्ञेयः शोषिणां प्राणनाशनः ।**
**दुश्चिकित्स्यतमो मन्दः सुकष्टो धातुशोषकृत् ।**

---

१. 'मन्दज्वरत्वं' क ख ।

राजयक्ष्मा के त्रिदोषज होने से यह भी त्रिदोषज ही होता है किन्तु कफ और पित्त के लक्षण विशेष रूप से व्यक्त होने के कारण यह कफपित्त भी कहा जाता है। राजयक्ष्मा के अतिरिक्त अस्थिमज्जविद्रधि तथा पूयमयता (Pyaemia) में भी प्रलेपकज्वर का लक्षण मिलता है। शोषिणां प्राणनाशनः शब्द से स्पष्ट है कि यह राजयक्ष्मा में ही असाध्य होता है विद्रधि आदि में नहीं।

विषमज्वरविशेषानर्धांगसन्तापयुतान् ज्वरान् वर्णयति—

विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते।
तेनार्धं शीतलं देहमर्धमुष्णं प्रजायते॥ ४२॥
काये दुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः।
तेनोष्णत्वं शरीरस्य शीतत्वं हस्तपादयोः॥ ४३॥
काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः॥ ४४॥
(अ. सं नि. अ)

आहाररस तथा शरीर में स्थित कफ और पित्त के दुष्ट होने पर शरीर का आधा भाग ठण्डा रहता है और आधा गरम। जब कोष्ठ में प्रकुपित पित्त और हाथ-पैरों में प्रकुपित कफ स्थित रहता है तो सम्पूर्ण शरीर गरम रहता है किन्तु हाथ पैर शीतल रहते हैं। इसके विपरीत यदि प्रकुपित कफ कोष्ठस्थ रहे और पित्त हाथ पैरों में हो तो सम्पूर्ण शरीर मे शीतलता और हाथ-पैरों में उष्णता रहती है॥ ४२-४४।

शीतपूर्वदाहपूर्वज्वरयोर्हेतुं तत्परिणामविशेषञ्चाह—

त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च॥ ४५॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः॥ ४६॥
द्वावेतौ दाहशीतादिज्वरौ संसर्गजौ स्मृतौ।
दाहपूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः॥ ४७॥
(सु. उ. तं. ३९)

यदि प्रकुपित वायु और कफ त्वचा में स्थित रहते हैं तो ज्वर के आदि में ठण्ड लगती है और उसका वेग शान्त हो जाने पर अन्त में पित्त के कारण दाह का अनुभव होता है। इसी प्रकार यदि त्वचा में प्रकुपित पित्त की स्थिति रहती है तो ज्वर के आदि में दाह होता है तथा वेग शान्ति हो जाने पर वायु और कफ शीत का अनुभव कराते हैं। दाहपूर्व तथा शीतपूर्व ये दोनों ज्वर संसर्गज कहलाते हैं। (यहाँ संसर्ग का अर्थ सन्निपात है) इन दोनों में दाहपूर्वज्वर रोगी को अत्यधिक कष्ट देनेवाला एवं अत्यन्त कृच्छ्रसाध्य होता है॥ ४५-४७॥

**विषमज्वरविशेषानाह—विदग्ध इत्यादि। विदग्धेऽन्नरसे दुष्टे आहाररसे तथा दुष्टे श्लेष्मणि पित्ते दुष्टे[1] देह व्यवस्थिते[2] भवतः, तेन हेतुना देहमर्धं शीतलं कफेनार्धं चोष्णं पित्तेन प्रजायते। अर्धत्वं चार्धनारीश्वराकारेण नरसिंहाकारेण वा यथा दोषं व्यवस्थानियमहेतोर-**

१. 'दुष्टे पित्ते दुष्टे श्लेष्मणि चेति पाठान्तरमप्युपलभ्यते।
२. देहे व्यवस्थिते नियमेन पृथक् देहे स्थिते भवत इत्यर्थः।

भावादिति। काय इत्यादि। काये अन्तरग्नौ, कोष्ठे इति यावत्। अन्ते हस्तपादयोः। उक्तार्थस्य विपर्ययेण ज्वरान्तरमाह—काये श्लेष्मेत्यादि। त्वक्स्थावित्यादि। त्वक्शब्देन त्वक्स्थो रस उच्यते, तत्स्थस्य तदुपचारेणेति गदाधरः, जेज्जटस्तु त्वचमेवाह। एतदभिप्रायेणैव चरकेण ज्वरेऽभ्यङ्गार्थं तैलादीन्यभिधायोक्तं—'तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः' इति (च. चि. अ. ३)। तयोः श्लेष्मानिलयोः। प्रशान्तयोरिति प्रशान्तवेगयोरित्यर्थः; नहि विषमेषु दोषस्य प्रशान्तिर्भवति, पुनर्वेगागमात्। यदाह सुश्रुतः—'स चापि विषमो देहं न कदाचिद्विमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते॥ वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यान्नैवोपलभ्यते' (सु. उ. अ. ३९) इति। इतरौ वातकफौ। दाहशीतादीति एको दाहादिः, अपरः शीतादिः। ननु, एतयोः संप्राप्तौ त्रिदोषजत्वमुक्तं; तत् कथं संसर्गजावित्युक्त, संसर्गो हि द्वयोर्भवति त्रयाणां सन्निपात इति स्थितिः। उच्यते-संसर्गः सम्बन्धः, स च द्वयोर्बहूनां च भवति, अत्र त्रयाणामुक्तः[1], न चैवं सर्वत्र; अथवा संसर्गः[2] सौम्याग्नेयदोषकोटिद्वयमेलापः। तत्र शीतादौ ज्वरे पित्तमनुबन्धः, दाहादौ वातकफावनुबन्धौ; अनुबन्ध्यश्च प्राधान्येन चिकित्स्योऽनुबन्धाविरोधेनेति प्रयोजनमेतस्य तयोर्दाहशीतादिज्वरयोर्मध्ये दाहपूर्वो दाहादिः कष्ट इति दुःखप्रदः। दाहादेः कष्टसाध्यत्वाभिधानेन शीतादेरर्थतोऽकष्टत्वमिति। उक्तविषमज्वराणामुपलक्षणत्वादन्येऽपि विषमज्वरा रात्रिज्वरादयो बोद्धव्या इति जेज्जटः। उक्त च तन्त्रान्तरे—'समौ वातकफौ यस्य क्षीणपित्तस्य देहिनः। प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य तु' इति। सर्वेषु च विषमज्वरेष्ववश्यम्भावी वायुः। यदाह वृद्धसुश्रुतः—'नर्तेऽनिलाद्धि विषमज्वरः समुपजायते। कफपित्ते हि निश्चेष्टे चेष्टयत्यनिलः सदा' (सु. उ. अ. ३९) इति। तथा विदेहेऽपि—'पवनो गतिवैषम्याद्विषमज्वरकारणम्'—इति। एषां च ज्वराणामृत्वादिहेत्वन्तरलाभादन्यथाभावोऽपि दृश्यते। तद्यथा—सन्ततः स्वरूपं त्यक्त्वा सततादीनामन्यतमत्व[3] प्रतिपद्यते तथा चतुर्थकस्तृतीयकादिरूपत्वम्[4]। यदाह चरकः—'ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्। कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते' (च. चि. अ. ३) इति। अस्यार्थः—बलाबलादिति ऋत्वादिमनोन्तेन संबध्यते, बलं चाबलं च बलाबलम्। अर्थशब्दोऽत्र प्राक्तनकर्मवाची। तं तं कालं सततकाद्युक्त, ज्वरः प्रतिपद्यत इति योजना। उदाहरणं च ऋत्वहोरात्रबलाबलाद्यथा-यदा निदाघोत्पन्नो वातप्रधानश्चतुर्थको वर्षासमयमाप्नोति तदा तेनर्तुनाऽऽप्यायितबलस्तृतीयकान्तानां[5] सततकादिनामन्यततत्वं प्राप्नोत्युत्कर्षात्। एवं वर्षासमुत्पन्नः सन्ततः शरद प्राप्यापकृष्टबलः सततादीनामन्यतमत्वमेत्यपकर्षात्। एवं पित्तकफयोरप्युत्कर्षापकर्षावृतुकृतौ व्याख्येयौ। अहोरात्रशब्देन कतिपयान्यहोरात्राणि गृह्यन्ते, नह्येकस्मिन्नहोरात्रे सततादीनामुत्कर्षापकर्षाभ्यामन्यथाभाव उपपद्यते; किंतु कतिपयैरेव। यथा वर्षाशरद्वसन्तप्रारम्भे वातादयो ज्वर चतुर्थकमारभन्ते तदा मध्यानि कतिपयदिनान्यवाप्य स एव तृतीयकपूर्वत्वेन[6] विपरिणमते उत्कर्षात्; अपकर्षात्त यदाऽ[7]न्यानि दिनान्याप्नोति तदा सन्ततो (वातारब्धः प्रावृष[8]:,) पित्तारब्धः शरदो, वसन्तस्य च श्लेष्मारब्धः, प्रतनुकत्वाद्दोषस्य सततादीनामन्यतमत्वेन विपरिणमत इति। दोषबलाबलाद्यथा—यदा सततादीनामन्यतमकारी दोषः श्लेष्मा मधुरस्निग्धादीन् दिवास्वप्नादींश्च हेतूनाप्नोति-तदा सन्ततकादीन् करोति। एवं वातपित्तयोरप्यूह्यम्। मनोबलाबलाद्यथा—यदा

---

१. 'त्रयाणामाहुः' इति क। २. 'ससर्गः साम्यात्' इति क। ३. 'प्रपद्यते' इति क। ४. 'तृतीयकचतुर्थकादिरूपत्वम्' इति क ख ५. तृतीयकादीनामन्यतमन्यतमत्वम्' इति ख। ६. 'तृतीयकत्वेन' इति क। ७. 'अन्यानि' इति क ख। ८. अय पाठः क ख पुस्तकयोर्नोपलभ्यते।

**सन्ततज्वरी सत्त्वगुणोद्रेकात् प्रहर्षावष्टम्भबहुलो भवति तदा सततादीनामन्यतमत्वं प्राप्नोति; यदा चतुर्थकज्वरी तमोगुणभूयिष्ठत्वाद्विषादादिभिरभिभूयते तदा तृतीयकादीनामन्यतमो भवति, 'विषादो रोगवर्धनानाम्' ( च. सू. अ. २५ ) इत्यागमात् । अन्ये तु मनः शब्देन बुद्धिं व्याख्यानयन्तिः कारणे कार्योपचारात्। तस्याश्च बलाबलं यथा—यदा चतुर्थकज्वरी प्रज्ञापराधाद्देवादीनभिभूयाहितान्याचरति तदा तृतीयकपूर्वेषामन्यतमत्वमाप्नोति; यदा तु शुद्धसत्त्वोत्कर्षाद्विवेकिन्या बुद्ध्या युक्तः स्यात्तदा शुभानि देवताराधनेष्टिबल्युपहारादीन्याचरति तदा सन्ततज्वरी सततादीनामन्यतमत्वं प्राप्नोति ।. अथं दशा यथा—सन्ततज्वरिणोऽपि यदि चतुर्थकवेदनीयं कर्म स्यात्तदा सन्ततोऽपि चतुर्थकत्वेन विपरिणमते; अथ चतुर्थकज्वराविष्टस्य यदि तत्कालपरिपाकि कर्म बलीयो भवति तदा सन्ततत्वेन परिणमते। एतच्च कर्मवशत्वमृत्वहोरात्रदोषबलाबलेष्वपि बोद्धव्यं, तदनन्तरं तन्निर्देशादिति ॥ ४२-४७ ॥**

**विमर्शः**—दोषों की स्थिति के अनुसार अर्धनारीश्वराकार या नृसिंहाकार किसी भी प्रकार से शरीर का आधा भाग उष्ण और आधा भाग शीतल रह सकता है। तात्पर्य यह कि यदि विदग्ध अन्न रस के कारण कफ और पित्त दोनों पृथक् पृथक् दुष्ट होने पर वामार्ध में प्रकुपित कफ और दक्षिणार्ध में प्रकुपित पित्त की स्थिति होती है तो शरीर के वामार्ध में शीतल और दक्षिणार्ध में उष्णता की प्रतीति आर्धनारीश्वर के समान होती है। इसी प्रकार यदि श्रोणिप्रदेश के उपरितन भाग में कफ और निम्न भाग में पित्त स्थित रहता है तो ऊपर के भाग में शीतलता ओर नीचे के भाग में उष्णता की प्रतीति होती है। यह प्रकार नृसिंहाकार कहलाता है। दोषों की स्थिति के अनुसार उष्णता और शीतलता की प्रतीति इनसे विपरीत क्रम से हो सकती है।

त्वक् शब्द से त्वचा तथा उसके आश्रित रस का भी ग्रहण कर लेना चाहिये। चरक ने इस बाह्यमार्गगत ज्वर की शान्ति के लिए ही तैलाभ्यङ्ग आदि का निर्देश किया है—

**तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः ॥**

'त्वक्स्थौ' आदि श्लोकों में प्रशान्त का अर्थ प्रशान्तवेग करना चाहिये; क्योंकि विषम ज्वर में दोष की पूर्ण शान्ति नहीं होती, वेग पुनः पुनः आया करते हैं। सुश्रुत ने कहा भी है—

**स चापि विषमो देहं न कदाचिद् विमुञ्चति। ग्लानिगौरवकार्श्येभ्यः स यस्मान्न प्रमुच्यते। वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते। धात्वन्तरस्थो लीनत्वात् सौक्ष्म्यान्नैवोपलभ्यते ॥**

यद्यपि सम्प्राप्ति में शीत और दाहपूर्व इन दोनों ज्वरों को त्रिदोषज ही माना है अतः यहाँ पुनः संसर्गज कहना अनुपयुक्त है; क्योंकि संसर्ग दो का और सन्निपात तीन का होता है, तथापि यहां संसर्ग शब्द सामान्य सम्बन्ध का वाची है जो कि दो, तीन या इससे भी अधिक का हो सकता है। इस प्रकार कोई दोष नहीं आता। अथवा सौम्य दोष वात और कफ तथा आग्नेय दोष पित्त इन दोनों के मेल को भी संसर्ग कह सकते हैं। शीतपूर्व ज्वर में वात और कफ अनुबन्ध्य ( प्रधान ) तथा पित्त अनुन्ध रूप से रहता है। इसी प्रकार दाहपूर्व ज्वर में पित्त अनुबन्ध्य ( प्रधान ) और वात तथा कफ अनुबन्ध रूप से रहते हैं। अनुबन्ध की चिकित्सा विशेष रूप से करनी चाहिये इसका निर्देश करना ही उक्त कथन का प्रयोजन है।

दाहपूर्व ज्वर कष्टसाध्य और दुःखप्रद होता है, इससे शीतपूर्व ज्वर की सुखसाध्यता स्पष्ट हो जाती है। जेज्जट का कथन है कि उक्त विषमज्वरों का पाठ उपलक्षण मात्र है अतः अन्य शास्त्रोक्त रात्रि ज्वर आदि का भी ग्रहण कर लेना चाहिये। कहा भी है—

**सम वातकफौ यस्य क्षीणपित्तस्य देहिनः। प्रायो रात्रौ ज्वरस्तस्य दिवा हीनकफस्य तु ॥**

क्षीणपित्त तथा प्रवृद्ध वातकफ मनुष्य को रात्रि में और हीनकफ मनुष्य को दिन में ज्वर

आता है। सभी विषमज्वरों में वायु की सत्ता अवश्यम्भावी है, यह वृद्ध सुश्रुत के निम्न वाक्य से स्पष्ट है—

**नर्तेऽनिलाद्धि विषमज्वरः समुपजायते। कफपित्ते हि निश्चेष्टे चेष्टयत्यनिलः सदा॥**

विदेह ने भी कहा है कि वायु गतिवैषम्य के कारण विषम ज्वर को उत्पन्न करता है—

**'पवनो गतिवैषम्याद्विषमज्वरकारणम्'**

**ज्वरों के रूप परिवर्तन एवं उनके कारण—**

ऋतु आदि के बलाबल के अनुसार विषमज्वर के प्रकार विभिन्न रूपान्तरों को भी धारण कर लेते हैं। यथा सन्तत ज्वर, सततक आदि अथवा चतुर्थक, तृतीयकादि ज्वरों के रूपों को भी प्राप्त कर लेते हैं चरक ने कहा भी है—

**ऋत्वहोरात्रदोषाणां मनसश्च बलाबलात्। कालमर्थवशाच्चैव ज्वरस्तं तं प्रपद्यते॥**

अर्थात् ऋतु आदि के बलाबल से ज्वर विभिन्न रूपान्तरों में परिवर्तित हो जाता है। यथा—ग्रीष्म ऋतु में उत्पन्न वातप्रधान चतुर्थक ज्वर वर्षा ऋतु को प्राप्त होकर अधिक बलवान् हो जाता है जिससे दोष प्राबल्य के अनुसार सततक अन्येद्युष्क या तृतीयक में से किसी भी रूप को धारण कर सकता है। इसी प्रकार वर्षा ऋतु में उत्पन्न वातप्रधान सन्तत ज्वर शरद् ऋतु में बलहीन होकर सततक आदि किसी रूप को धारण करता है। ऋतु के अनुसार पित्त और कफ का उत्कर्ष या अपकर्ष भी इसी प्रकार होता है। यथा-वर्षा ऋतु में उत्पन्न पित्तप्रधान चतुर्थक ज्वर शरद् ऋतु में अधिक बलवान् होने से तृतीयक आदि रूपों को प्राप्त हो जाता है। इसी प्रकार शरद् ऋतु में उत्पन्न पित्तप्रधान सन्तत ज्वर हेमन्त में हीनबल होने से सततक आदि रूपों में परिवर्तित हो जाता है। शिशिर में उत्पन्न कफप्रधान चतुर्थक ज्वर वसन्त ऋतु में प्रवृद्धबल होने से तृतीयक आदि के रूप को और वसन्त में उत्पन्न सन्तत ज्वर ग्रीष्म ऋतु में स्वभावतः हीनबल होने से सततक आदि के रूप को धारण करता है। यह ऋतु के बलाबल का उदारण है।

अहोरात्र शब्द से कुछ अहोरात्र का ग्रहण करना चाहिये; क्योंकि केवल एक अहोरात्र (२४ घण्टा) में सततक आदि ज्वरों में दोषों के उत्कर्ष और अपकर्ष से रूपान्तरता नहीं आती। जब वर्षा, शरद् और वसन्त ऋतु के प्रारम्भिक दिनों में वात आदि दोष तत्तद्दोषोल्वण चतुर्थक ज्वर को उत्पन्न करते हैं तो उन ऋतुओं के मध्य दिनों में दोषों के बलवान् होने से वह ज्वर तृतीयक आदि रूपों में परिवर्तित हो जाता है। इसके विपरीत वर्षा के प्रारम्भ में उत्पन्न वात-प्रधान सन्तत ज्वर वर्षा के अन्तिम दिनों में हीनबल होने से सततक आदि रूप धारण करता है। सन्तत ज्वर वर्षा के अन्तिम दिनों में हीनबल होने से सततक आदि रूप धारण करता है। शरद् में उत्पन्न पित्तप्रधान और वसन्त में उत्पन्न कफप्रधान सन्तत ज्वर ऋतु के अन्तिम दिनों में क्षीणबल होने से अन्य रूपों में परिवर्तित हो जाता है।

**दोषबलाबल**—सततक आदि में श्लेष्मा की उल्वणता रहे और उसमें श्लेष्मा के वर्धक मधुर स्निग्ध आहार और दिवास्वप्न आदि विहार किये जाँय तो प्रवृद्ध दोष ज्वर को सन्तत आदि किसी उत्कृष्ट बलवाले स्वरूप में परिवर्तित कर देता है। पित्त तथा वातोल्वण को तथा विपरीत क्रम को भी इसी प्रकार समझ लेना चाहिए।

**मन का बलाबल**—यदि सन्तत ज्वर से पीड़ित रोगी में सत्वगुण की प्रबलता रहती है तो रोगी प्रसन्न और सहिष्णुना होता है, इससे वह रोग बढ़ नहीं पाता अपितु हीनबल होकर सततक आदि स्वरूपों को प्राप्त होता है। इसके विपरीत यदि तमोगुण-प्रधान रोगी चतुर्थक ज्वर से पीड़ित है तो विषाद के कारण उसका वह ज्वर तृतीयक आदि रूपों को धारण कर सकता है; चरक ने विषाद को अत्यन्त रोगवर्धक कहा है—**'विषादो रोगवर्धनाम्'**

**बुद्धि का बलाबल**—कुछ लोग कारण से कार्य की कल्पना कर मन शब्द से बुद्धि का ग्रहण करते है। यदि चतुर्थक ज्वर से पीड़ित रोगी प्रज्ञापराधवश वैद्य आदि के वचन की अवहेलना

कर अहित पदार्थों का सेवन करता है तो उसका ज्वर अन्य बलयुक्त ज्वरों में परिवर्तित हो जाता है। इसके विपरीत यदि वह विवेकपूर्ण बुद्धि से पथ्य-सेवन आदि कराता है तो उसका सन्तत ज्वर भी हीनबल से सततक आदि रूपों को प्राप्त हो जाता है।

**अर्थ का बलाबल**—अर्थ से यहाँ पूर्वजन्म का कर्म लेना चाहिए। यदि सन्तत ज्वर से पीड़ित रोगी का प्राक्तन कर्म चतुर्थक के अनुकूल है तो वह भी चतुर्थक में ही परिवर्तित हो जाता है। इसी प्रकार सन्तत के अनुकूल कर्म होने से हीनबल चतुर्थक भी सन्तत में परिणत हो जाता है।

कर्म के बलाबल का सम्बन्ध ऋतु, अहोरात्र आदि के साथ भी कर सकता है, क्योंकि इसका निर्देश उन सबके पश्चात् किया गया है।

धात्वाश्रयभेदेन ज्वरभेदानाह—

**गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ।**
**रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते॥ ४८॥**

ज्वर जब रसधातु में स्थित रहता है तो सम्पूर्ण शरीर में भारीपन, हृदय में बेचैनी या (आमाशय के हृदयसमीपस्थ भाग ( Cardiac end ) में विकृति से बार-बार वमन की इच्छा, अवसाद, वमन, अरुचि तथा दीनता ये लक्षण होते हैं॥ ४८॥

**रक्तनिष्ठीवनं दाहो मोहच्छदनविभ्रमौ।**
**प्रलापः पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम्॥ ४९॥**

ज्वर के रक्ताश्रित होने पर रक्त का वमन, दाह, ज्ञानशून्यता, वमन, चित्त की व्याकुलता, प्रलाप, शरीर पर पिडकाओं का निकलना तथा प्यास की अधिकता ये लक्षण होते हैं॥ ४९॥

**पिण्डिकोद्वेष्टनं तृष्णा सृष्टमूत्रपुरीषता।**
**ऊष्माऽन्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे॥ ५०॥**

पिण्डलियों में ऐंठन, प्यास, मलमूत्र की (क्षण-क्षण में अधिक या अनियन्त्रित) प्रवृत्ति, सन्ताप की अधिकता, आन्तरिक दाह, (सर्वाङ्ग की पेशियों के उद्वेष्टन के कारण) अङ्गों का इतस्ततः फेंकना तथा ग्लानि ये मांसगत ज्वर के लक्षण हैं॥ ५०॥

**भृशं स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च।**
**दौर्गन्ध्यारोचकौ ग्लानिर्मेदःस्थे चासहिष्णुता॥ ५१॥**

मेद धातु में स्थित ज्वर में पसीना अधिक आता है, प्यास अधिक लगती है, मूर्च्छा, प्रलाप, वमन, शरीर में दुर्गन्धि, अरुचि, ग्लानि तथा चिड़चिड़ापन अथवा प्रकाश, शब्द आदि की असहिष्णुता ये लक्षण होते हैं॥ ५१॥

**भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च।**
**विक्षेपणं च गात्राणामेतदस्थिगते ज्वरे॥ ५२॥**

अस्थिगत ज्वर में अस्थियों में भेदनवत् पीड़ा, (पीडाधिक्य के कारण) कराहना, श्वास की तीव्रता, विरेचन, वमन, अङ्गों का इतस्ततः फेंकना ये लक्षण होते हैं॥ ५२॥

**तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा।**
**अन्तर्दाहो महाश्वासो मर्मच्छेदश्च मज्जगे॥ ५३॥**

मज्जास्थित ज्वर में आँखों के आगे अन्धेरा-सा छाया रहता है, हिचकी और खाँसी होती है,

शीत अधिक लगता है, वमन की प्रवृत्ति होती है, अन्तर्दाह, महाश्वास एवं मर्मस्थानों में छेदनवत् पीड़ा का अनुभव होता है ॥ ५३ ॥

**मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे ।**
**शेफसः स्तब्धता मोक्षः शुक्रस्य तु विशेषतः ॥ ५४ ॥**

(सु. उ. अ. ३९)

शुक्र और शुक्रस्थानगत ज्वर हो जाने पर शिश्न स्तब्ध हो जाता है, विशेषतः शुक्र निकलने लगता है और रोगी मृत्यु को प्राप्त होता है ॥ ५४ ॥

**( रसरक्ताश्रितः साध्यो मांसमेदोगतश्च यः ।**
**अस्थिमज्जगतः कृच्छ्रः शुक्रस्थस्तु न सिध्यति ॥ १ ॥ )**

(च. चि. अ. ३)

( रस, रक्त, मांस तथा मेद धातुगत ज्वर साध्य होता है। अस्थि और मज्जागत कृच्छ्रसाध्य तथा शुक्रगत ज्वर असाध्य होता है ॥ १ ॥ )

उक्तवातादिज्वराणां धातुविशेषदूष्यतयाऽधिकलक्षणानि भवन्ति; यदुक्तं—'वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा। तथा तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान्' ( सु. उ. अ. ३९ ) इति; एतदभिधानं च रसादिधात्वविरोधेन वातादिचिकित्साकरणार्थम्; अतस्तानाह—गुरुतेत्यादि। उदयोत्क्लेशः हृदयस्थितदोषस्योपस्थितवमनत्वमिव, रसस्य हृदयस्थत्वात्। रसस्थ इत्यनेन विशेषेणात्र रसो दूष्यः, सर्वेषामेव ज्वराणां रसानुगत्वात् दैन्यं क्लान्तचित्तत्वम्। पिण्डिकेत्यादि। पिण्डिका जान्वधो जङ्घामांसपिण्डः, तस्या उद्वेष्टनं दण्डादिना पीडनेनेव वेदना पिण्डिकोद्वेष्टनम्; एवमन्यत्रापि। सृष्टमूत्रपुरीषता प्रवर्तमानमूत्रपुरीषता[1]। ऊष्मा बहिः, एतच्च विशेषपरं, प्रायः सर्वज्वरेषु तथाभावात्। 'ऊष्माऽन्तर्मोह विक्षेपौ' इति पाठान्तरे ऊष्माऽन्तः अन्तर्दाह इत्यर्थः, विक्षेपो हस्तादिचालनम्। भृशं स्वेद इति घर्मस्य मेदोमलत्वात्; तद्विकृत्यैव दौर्गन्ध्यं गात्रे। असहिष्णुता वेदनाया असहत्वं, क्रोधनत्वमिति कार्तिकः। भेदोऽस्थ्नामिति भेद इव भेदः अङ्गवदीक्षितार्थः; 'परपदार्थेषु प्रयुज्यमानाः शब्दा वृत्ति (वृति)मन्तरेणापि वृत्त्य (वृत्य)र्थं गमयन्ति'[2] यथा—'अग्निर्माणवकः'। एवमन्यत्रापि भेदादौ द्रष्टव्यम्। कूजनं कुन्थनं; कुञ्चन[3]म्' इति पाठान्तरेऽस्थ्नामेव संकोच इत्यर्थः। तमःप्रवेशनम् अन्धकारप्रविष्टस्येवासवित्तिः। महाश्वासः श्वासाधिकारे वक्ष्यमाणलक्षणः। मर्मशब्देन हृदयमुच्यते, प्राधान्यादिति कार्तिकः; तस्य छेद इव मर्मच्छेदः। मरणमित्यादि शुक्रगतस्य। तत्रैतेषु रसादिधातुगतज्वरेषु मध्ये शुक्रस्थानगते मरणं प्राप्नुयादिति योज्यम्। शुक्रं च तत्स्थानं चेति शुक्रस्थानं; ( न तु शुक्रस्य स्थानं शुक्रस्थानं[4] ), शुक्रस्य सर्वदेहगत्वेन नियतस्थानासम्भवादिति कार्तिकः। यदुक्तं,—'यथा पयसि सर्पिस्तु गुडश्चेक्षुरसे[5] यथा। शरीरेषु तथा नृणां शुक्रं विद्याद्भिषग्वरः'–(सु. शा. अ. ४ इति।) विशेषत इति पदेन शुक्रस्य बाहुल्येन विसर्गं, अन्यस्यापि रक्तादेरिति वदन्ति ॥४८–५४॥

विमर्शः—पूर्व वर्णित वातिक आदि ज्वर या उनके उत्पादक दोष ही जब रस आदि धातुओं में आश्रित होते हैं तो कुछ विशेष लक्षण मिलते हैं। सुश्रुत ने भी कहा है—

**वातपित्तकफोत्थानां ज्वराणां लक्षणं यथा। यथा तेषां भिषग्ब्रूयाद्रसादिष्वपि बुद्धिमान् ॥**

१. अस्याग्रे 'रोगप्रभावात्' इत्यधिकमातङ्कदर्पणे। २. अयं पाठः ख पुस्तके नोपलभ्यते। ३. 'अस्फुटध्वनिः' इति पा०। ४. अयं पाठः क ख पुस्तकयोर्नोपलभ्यते। ५. 'गुणश्चेक्षौ रसो'

दोषों के अनुसार ज्वरों में जो लक्षण होते हैं वहाँ रस, रक्त आदि धातुओं के आश्रित होने पर भी होते हैं ( साथ में रसादिगत ज्वरों के वर्णित लक्षण भी अधिक होते हैं )। जिस प्रकार विभिन्न लक्षणों से वात आदि का ज्ञान किया जाता है वैसे ही वातादि का ज्ञान होने पर उक्त विशिष्ट लक्षणों से रसाश्रित या रक्ताश्रित आदि ज्वरों का ज्ञान भी कर लेना चाहिए। धात्वाश्रयता के ज्ञान से साध्यासाध्यता तथा चिकित्साविशेष के ज्ञान का मार्ग प्रशस्त हो जाता है। एव चिकित्सा में भी विशेषता होती है।

यद्यपि सभी ज्वर रसाश्रित होते है **'ज्वरदाः स्युः रसानुगाः'** तथापि यहाँ रस की विशेषदूष्यता बताने के लिये पुनः इसका कथन किया गया है। विभिन्न धातुगत ज्वरों के लक्षण जहाँ सम्पूर्ण या अधिक रूप में विद्यमान रहेंगे वहीं तत्तद् धातुगत ज्वर का अनुमान करना चाहिए, केवल किसी एक लक्षण से नहीं।

रसस्थ विषमज्वर सन्तत स्वरूप का होता है अतः सन्तत ज्वर में रस के अनुकूल भी चिकित्सा करनी चाहिए। रक्तगत ज्वर सन्तत स्वरूप का तथा मासगत विषमज्वर अन्येद्युष्क प्रकार का होता है। मेदोगत तृतीयक और अस्थिमज्जागत होने पर चतुर्थक ज्वर होता है। ज्वर की ऊष्मा से मेद धातु के पाक के कारण मेदोगत ज्वर में पसीना अधिक आता है क्योंकि **'मलः स्वेदस्तु मेदस.'** स्वेद मेद का मल है। इस प्रकार प्रलेपक आदि जिन ज्वरों में मेद का क्षय अधिक होता है उन सब में स्वेद की बहुलता होती है। अस्थि-मज्जागत ज्वर के लक्षण चतुर्थक तथा यक्ष्मा की विशेष अवस्थाओं में मिलते हैं। वृषण (Lestes), पौरुषग्रन्थि (Prostate) आदि अङ्ग शुक्रस्थान कहलाते हैं। इसके अतिरिक्त सूक्ष्म शुक्र भी होता है जिसका स्थान सम्पूर्ण शरीर है। शह शरीर में पौरुष चिह्नों का प्रकट करता है। इस प्रकार सर्वशरीर विशेषतः वृषण आदि अङ्ग शुक्र के स्थान हैं। चरक ने भी कहा है-**'शुक्रवहानां स्रोतसां वृषणौ मूलं शेफश्च'** ( च. वि. अ.५) तथा **'यथा पयसि सर्पिस्तु गुडश्चेक्षुरसे यथा। शरीरेषु तथा नृणां शुक्रं विद्याद्भिषग्वरः'**। इसीलिए **'शुक्रं च तत्स्थानं च शुक्रस्थानम्'** ऐसा पदच्छेद मूल श्लोक में करना ठीक है, न कि **'शुक्रस्य स्थानम्'**। 'विशेषतः' शब्द से स्पष्ट है कि शुक्र का मोक्ष अधिक मात्रा में होता है तथा रक्तादि का भी निर्हरण होता है। शुक्र ही सम्पूर्ण शरीर का पोषक है, इस प्रकार शुक्र या शुक्र-स्थान में ज्वरकारक दोष होने पर रोगी की मृत्यु हो जाती है। सुषुम्ना काण्ड के अभिघात तथा अलर्कविष की अन्तिमावस्था में शुक्रगत ज्वर के लक्षण सुस्पष्ट उपलब्ध होते हैं।

**वातादिज्वराणां कालानुसारं प्राकृतत्वं वैकृतत्वं चाह—**

**वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।**
**वैकृतोऽन्यः स दुःसाध्यः प्राकृतश्चानिलोद्भवः ॥ ५५ ॥**

( वा. नि. अ. २ )

वर्षा, शरद और वसन्त में क्रमशः वातिक, पैत्तिक तथा कफज ज्वर होने पर इन्हें प्राकृत ज्वर कहते हैं। इस क्रम से विपरीत होने पर वैकृत ज्वर कहे जाते हैं। वैकृतज्वर तथा प्राकृत वातिक ज्वर कृच्छ्रसाध्य होते हैं ॥ ५५ ॥

**(उक्तवातादिज्वराणां कालप्रकृतिमुद्दिश्य प्राकृतत्वं वैकृतत्वं चाह-)वर्षेत्यादि। वर्षादिषु वाताद्यैः क्रमाद्यो ज्वरः स प्राकृतः; वर्षासु वातिकः, शरदि पैत्तिकः, वसन्ते श्लैष्मिकः। अस्मादन्यो वैकृतः, यथा–वर्षासु पैत्तिक इत्यादि। स इति वैकृतो दुःसाध्यः, अर्थात् प्राकृतः सुखसाध्य इति। यदुक्तं,–'प्राकृतः सुखसाध्यस्तु वसन्तशरदुद्भवः** (च. चि. अ. ३)'– **इति। अत्र वाग्भटेन वातजस्य प्राकृतत्वप्रणयनं यत् कृतं तदन्ये नानुमन्यन्ते, दुःसाध्यत्वेन**

वैकृतादभिन्नत्वात्। जतूकर्णेनाप्यसौ न पठितः। यदाह—'वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः'—इति। अत्रोच्यते—न प्राकृतत्वं सुखसाध्यत्वख्यापनपरा संज्ञा, किन्तु कुम्भकारादिवद्यौगिकत्वं; यतो यथर्तुप्रकुपितो दोषः प्रकृतिरुच्यते, तत उद्भूतः[1] प्राकृतः, तेन प्राकृतत्वेऽपि दोषस्वभावाद्वातिकस्य दुःखसाध्यत्वं वैकृतवदिति दुःखसाध्यत्वेन वैकृतसाधर्म्याच्चरकजतूकर्णाभ्यां नोक्तः, न तु प्राकृतत्वाभावादित्यभिप्रायो वाग्भटस्येति। अन्यरोगेषु प्राकृतत्वेन दुःसाध्यत्वं, ज्वरस्य तु व्याधिप्रभावात् सुखसाध्यत्वम्। तन्त्रान्तरं हि—'ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम्'—इति ॥५५॥

विमर्शः—दोषविरुद्ध तथा ऋतुविरुद्ध उपचारों के समान होने से प्राकृत ज्वर सुखसाध्य होता है। प्राकृतः 'सुखसाध्यस्तु वसन्तशरदुद्भवः' (चरक)। वातजन्य प्राकृतज्वर भी प्रायः कृच्छ्रसाध्य होता है प्रयेणानिलजो दुःखः' चरकः। इसमें स्वाभाविक वातप्रकोप के अतिरिक्त अन्य दोषों का प्रकोप भी रहता है। इसके अतिरिक्त वातज्वर में जाठराग्निदौर्बल्य तथा लङ्घन सहन करने की शक्ति का ह्रास हो जाता है। कहा भी है।

आदानदुर्बले देहे पक्ता भवति दुर्बलः। स वर्षास्वनिलादीनां दूषणैर्बाध्यते पुनः ॥

इसकी उत्पत्ति में चरक ने कहा है—

भूबाष्पान्मेघनिःष्यन्दात् पाकादम्लाजलस्य च। वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥

इस प्रकार वातिकज्वर में अन्य दो दोष भी प्रायः प्रकुपित रहते हैं अतः उसे कृच्छ्रसाध्य माना गया है। पैत्तिक और कफज प्राकृत ज्वर एकदोषज तथा लङ्घन सहन करने की शक्ति से युक्त होने के कारण साध्य होते हैं, कहा भी है—'कफपित्ते द्रवे धातू सहेते लंघनं महत्'।

कतिपय आचार्यों का कथन है कि वाग्भट ने जो वातिक ज्वर को भी प्राकृत कहा है वह ठीक नहीं, क्योंकि वह भी दुःसाध्य होने से वैकृत के समान ही होता है। जतूकर्ण ने भी इसका पाठ इसी अभिप्राय से नहीं किया—'वसन्तशरदोः प्राकृतोऽन्यत्र वैकृतः'। वस्तुतः प्राकृत शब्द सुखसाध्य का वाचक नहीं है अपितु कुम्भकार के समान यौगिक संज्ञामात्र है। ऋतु के अनुसार दोषप्रकोप प्रकृति कहलाती है और उससे होनेवाला ज्वर प्राकृत कहलाता है। इस प्रकार वातिक ज्वर प्राकृत होते हुए भी दोषस्वभाव से अन्य वैकृत ज्वरों के समान कृच्छ्रसाध्य होता है, इसी आशय से चरक तथा जतूकर्ण ने वातिक का पाठ प्राकृत में नहीं किया प्राकृतत्व का अभाव होने से नहीं।

इसके अयिरिक्त अन्य रोगों में प्राकृत होना असाध्यता का निदर्शक है किन्तु व्याधिप्रभाव से ज्वर इसका अपवाद है। तन्त्रान्तर में कहा भी है—

ज्वरे तुल्यर्तुदोषत्वं प्रमेहे तुल्यदूष्यता। रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम् ॥

ज्वर में ऋतु और दोष की तुल्यता सुखसाध्यता की निदर्शक होती है।

दोषाणां प्राकृतज्वरकर्तृत्वं निरूपयति—

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।**
**कुर्यात् पित्तं च शरदि तस्य चानुबलः कफः ॥ ५६ ॥**
**तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम्।**
**कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ५७ ॥**

(वा. नि. अ. २)

१. 'तथाभूतः' इति क ख।

वर्षा ऋतु में प्रकुपित वायु पित्त और कफ के अनुबन्ध से युक्त होकर ज्वर को उत्पन्न करता है और शरद में प्रकुपित पित्त जिस ज्वर को उत्पन्न करता है उसमें कफ का भी अनुबन्ध रहता है। पित्त और कफ की प्रकृति ( द्रव धातु ) तथा विसर्गकाल के होने से पित्त और कफ के अनुबन्ध से युक्त वर्षाकालीन वातिकज्वर और कफानुबन्धी शरत्कालीन पित्तज्वर में अनशन करने में कोई भय नहीं रहता। प्रकुपित कफ वसन्त ऋतु में जिस ज्वर को उत्पन्न करता है उसमें भी प्रायः वात तथा पित्त का अनुबन्ध रहता है ॥ ५६-५७ ॥

तेषामेव प्राकृतज्वराणां चिकित्साविशेषार्थमुत्पत्तिक्रममाह—वर्षास्वित्यादि। दुष्ट इति कुपितः, ग्रीष्मे सञ्चितत्वात्। पित्तश्लेष्मान्वित इति तत्कालोचितकफानुबन्धः। यदुक्तं— 'भूबाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च। वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः'— (च. सू. अ. ६) इति। कुर्यादिति छेदः। पित्तमित्यादि। पित्तं च शरदि दुष्टं ज्वरं कुर्यादिति पूर्वोक्तेन सम्बध्यते, एवं कफी वसन्ते इत्यत्रापि योज्यम्। पित्तदुष्टिश्च शरदि वर्षासु संचितत्वात्। अनुबलोऽनुबन्ध, तस्य च हेतुर्वार्षिकक्लेदानुवृत्तिरेव। तत्प्रकृत्येत्यादि। तयोः पित्तश्लेष्मणोः प्रकृत्या स्वभावेन, तत्कृतयोर्ज्वरयोरनशनाल्लङ्घनान्न भयं भवति। यदुक्तं— 'कफपित्ते द्रवे धातू सहेते लङ्घनं महत्। आमक्षयादूर्ध्वमतो[1] वायुर्न सहते क्षणम्' इति। विसर्गाच्च हेतोर्नानशनाद्भयम्। वर्षाशरद्धेमन्ता विसर्गः, तत्रोपचितबलाः प्राणिनो भवन्ति, सोमस्य बलवत्वात्; शिशिरवसन्तग्रीष्मास्त्वादानं, तत्रोपचितबलाः प्राणिनः, सूर्यस्य बलवत्त्वादिति व्युत्पादितं शास्त्रे। 'तत्प्रकृत्या विसर्गस्य' इति पाठान्तरे तत्प्रकृत्या कफपित्तप्रकृत्या, विसर्गस्य च प्रकृत्येति योज्यम्। कफ इत्यादि। तं कफमनु वातपित्ते भवतः, अनुबन्धरूपे भवत इत्यर्थः। हेतुश्चात्रवसन्तस्यादानमध्यत्वेनाग्नेयरूक्षत्वेन वातपित्तप्रकोपकत्वम्। यदुक्तं चरके 'आदानमध्ये तस्यापि वातपित्तं भवेद्गुरु' (च. चि. अ. ३) इति। अत्र कफपित्तप्रकृत्या लङ्घनं युक्तमेव, किन्त्वादानमध्यत्वेन न निर्भयं तत् कार्यम्। अत एव 'तत्र नानशनाद्भयम्' इत्येतस्मात् पूर्वमेव पठितम्, अन्यथा सर्वशेषे पठितं स्यादिति ॥५६-५७॥

विमर्शः—वर्षाऋतु में रहने वाले ज्वर में क्रमस जलवृष्टि और जलादि के अम्लपाक के कारण वायु के साथ पित्त और कफ का भी अनुबन्ध रहता है; उसी प्रकार शरद् ऋतु के पित्त ज्वर में वर्षाकालीन क्लेद के अनुबन्ध के कारण कफ का अनुबन्ध रहता है तथा शरद में शीत भी ( विशेषतः रात्रि में ) प्रारम्भ हो जाता है, वह भी कफ को उत्पन्न करता है। इसीलिए वर्षाकालिन वातिकज्वर और शरत्कालीन पित्तज्वर में क्रमशः कफ-पित्त और कफ का अनुबन्ध होने से आमदोष के पाचन के लिए अनशन सरलता से किया जा सकता है; क्योंकि पित्त और कफ द्रव धातु है। कहा है—

कफपित्ते द्रवे धातू सहेते लंघनं महत्। आमक्षयादूर्ध्वमतो वायुर्न सहते क्षणम् ॥

इसके अतिरिक्त वर्षा और शरद् के विसर्गकाल का अंश होने से भी अनशन करने में कोई भय नहीं रहता। विसर्ग तथा आदानकाल के भेद से वर्षा दो भागों में विभक्त रहता है। वर्षा, शरद् और हेमन्त ये तीन ऋतु विकर्गकाल हैं। इसमें सोम के स्वभावतः बलवान् होने से प्राणियों का बल भी बढ़ता है। स्वाभाविक बल की वृद्धि से रोग तथा उसमें प्रयुक्त अनशन जैसी क्रियाओं को सहन करने की शक्ति भी शरीर में अधिक होती है। शिशिर, वसन्त तथा ग्रीष्म आदानकाल हैं। इनमें सूर्य का बल बढ़ने से प्राणियों के शरीर तथा उनके बल का स्वभावतः ह्रास होता है। चूंकि वसन्त आदानकाल का मध्य है अतः आग्नेय गुण और रूक्ष गुण के कारण

१. 'मपि' इति पा०।

वसन्त में होनेवाले कफज्वर के साथ पित्त और वायु का अनुबन्ध रहता है। चरक ने कहा भी है—'**आदानमध्ये तस्यापि वातपित्तं भवेदनु**'। यहाँ भी कफ और पित्त की सत्ता के कारण लंघन कराया जा सकता है किन्तु आदान का मध्य होने से वह शारदीय पित्तज्वर के समान अनपायी नहीं होता। इसी आशय से वाग्भट ने '**तत्र नानशनाद् भयम्**' इस वाक्य को वसन्त में होने वाले कफज्वर के वर्णन के पूर्व ही रखा है। तात्पर्य यह है कि वातिक ज्वर में लंघन निषिद्ध होने पर भी वर्षाकालीन वातिकज्वर में लंघन करा सकते हैं और शरद्कालीन पैत्तिक ज्वर में निर्भीक होकर लघन करा सकते हैं किन्तु वसन्त ऋतु के कफज्वर में सामान्यतः कफज्वरोक्त लघन का अधिक प्रयोग सावधानी से करना चाहिए।

**ज्वरस्य प्रवृत्तिं वृद्धिञ्चाह—**

## काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥ (वा. नि अ. २)

दोषप्रकोपक (स्वाभाविक) काल के अनुसार सभी ज्वरों की प्रवृत्ति या वृद्धि होती है।

**कालोऽपि दोषविशेषस्य लक्षणमित्याह–काल इत्यादि। यथास्वं काले यस्य वातादेर्यः प्रकोपकालस्तत्र तज्जन्यज्वरस्य प्रवृत्तिरुत्पादो वृद्धिर्वा भवति; अथवा प्रवृत्तिर्नित्यज्वरस्य, वृद्धिर्विषमज्वरस्येति ॥**

**विमर्शः**—तात्पर्य यह है कि वात आदि के जो प्रकोपक काल शास्त्र में वर्णित हैं उन्हीं कालों में वातादि जनित ज्वरों का प्रकोप भी होता है। यथा—वात के प्रकोपक वर्षाऋतु, अन्नपरिपाक-काल तथा अपराह्ण के समय में वातज्वर की प्रवृत्ति या वृद्धि होती है। इसी प्रकार शरद्, ग्रीष्म, मध्याह्न तथा अर्धरात्रि के समय पित्तज्वर और शिशिर, वसन्त तथा प्रातःकाल कफज्वर की प्रवृत्ति या वृद्धि होती है। इससे प्रवृत्ति और वृद्धि काल के द्वारा ज्वर के आरम्भिक दोष का भी अनुमान हो सकता है।

**कालवदुपशयानुपशययोरपि दोषविशेषस्य लक्षणत्वं प्राह—**

## निदानोक्तानुपशयो विपरीतोपशायिता ॥ ५८ ॥ (वा. नि. अ. २)

(आशङ्कित दोषों के) निदानोक्त (औषध अन्न और विहार) के सेवन से अनुपशय (अहित) और विपरीत पदार्थों के सेवन से उपशय या लाभ देखकर विशिष्ट दोष की कल्पना करनी चाहिए।

**(यथा कालो दोषविशेषस्य लक्षणं) तथोपशयानुपशयावपि लक्षणमित्याह–निदानेत्यादि। निदानत्वेन ये उक्ता आहाराचारादयस्तैरनुपशयो दुःखं निदानोक्तानुपशयः। विपरीतै[1]र्दोषादिविपरीताहाराचारैरुपशायिता सुखजननशीलत्वं विपरीतोपशायितेति ॥ ५८ ॥**

**विमर्शः**—तात्पर्य यह है कि जिस प्रकार विशिष्ट काल में ज्वर या अन्य रोग की प्रवृत्ति या वृद्धि को देखकर उसकी वातादिजन्यता का अनुमान कर लिया जाता है वैसे ही अनुपशयरूप कुछ विशिष्ट आहार–विहारों के सेवन से ज्वर की प्रवृत्ति एवं वृद्धि तथा कुछ विपरीत या उपशयरूप पदार्थों के सेवन से उसकी शान्ति को देखकर भी वातादिजन्यता का अनुमान कर लेना सरल है। यथा रूक्ष, लघु, शीत आदि पदार्थों से प्रकुपित हुआ वायु वातज्वर को उत्पन्न करता है। यदि ऐसे रोगी को पुनः इसी प्रकार के पदार्थ सेवन कराये जायें तो रोग की वृद्धि होगी। इसके विपरीत यदि स्निग्ध और उष्ण पदार्थ प्रयोग में लाये जायें तो ज्वर शान्त हो जायगा। इसी प्रकार सर्वत्र उपशय तथा अनुपशय भी व्याधिज्ञापक लक्षण माने जाते हैं। ॥५८॥

१. 'दोषाहाराचाराद्यैः' इति पा०।

उक्तज्वराणां सम्प्राप्तिवैशेष्यादन्तर्वेगत्वं बहिर्वेगत्वं च प्रतिपादयति—

अन्तर्दाहोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्चोविनिग्रहः ॥ ५९ ॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ।
सन्तापो ह्यधिको बाह्यस्तृष्णादीनां च मार्दवम् ॥ ६० ॥
बहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च । ( च. चि .अ. ३ )

आन्तरिक दाह की अधिकता, अत्यधिक प्यास, प्रलाप, तीव्र श्वास, भ्रम, सन्धि तथा अस्थियों में तीव्र शूल, स्वेदप्रवृति का सर्वथा अभाव तथा दोष और मल का अवरोध ये अन्तर्वेग ज्वर के प्रधान लक्षण हैं। त्वचा पर बाह्य ताप की अत्यधिक प्रतीति होना तथा तृष्णा, प्रलाप व श्वास जैसे अन्तर्वेग ज्वर के लक्षणों की मृदुता वे बहिर्वेग ज्वर के लक्षण हैं। यह सुखासाध्य होता है ॥ ५९–६० ॥

उक्तज्वराणां मध्ये संप्राप्तिवशात् कश्चिदन्तर्वेगो भवति कश्चिद्बहिर्वेगस्तयोर्लक्षणमाह— अन्तर्दाह इत्यादि। श्वसनं श्वासः, 'सदनम्' इति पाठान्तरं, तन्न युक्तमिति जेज्जटः; यतोऽन्तर्वेग एवं सुश्रुते गम्भीराख्यया पठितः, तत्र च श्वास एव पठित इति। विनिग्रहोऽप्रवृत्तिः। सन्ताप इत्यादि। तृष्णादीनामित्यादिशब्देनोक्तप्रलापादीनां ग्रहणम्। मार्दवं स्वल्पत्वम्। अत्र सुखसाध्यत्वाभिधानेनान्तर्वेगस्य कृच्छ्रसाध्यतां सूचयति, असाध्यतां वा, 'गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत्' (सु.उ अ.३९) इति सुश्रुतवचनादिति ॥५९-६०॥

विमर्शः—तुल्य लक्षण होने के कारण इसे गम्भीर ज्वर भी कह सकते हैं। सुश्रुत ने कहा है—
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया। आनद्धत्वेन चात्यर्थं श्वासकाशोद्गमेन च ॥
दोष और मल का अवरोध ही आनद्धता कहलाता है। गम्भीर धातुओं में प्रविष्ट होने के कारण इसे गम्भीर कहते हैं। इस प्रकार चरक ने जिसे अन्तर्वेग कहा है सुश्रुत उसको ही गम्भीर कहते हैं। बहिर्वेग ज्वर के लिये सुखसाध्य विशेषण से स्पष्ट है कि अन्तर्वेग ज्वर दुःसाध्य या असाध्य होता है। सुश्रुत ने कहा भी है—**गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत्।**

चिकित्सासौकर्यार्थमामपच्यमाननिरामज्वरलक्षणमाह—

लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः ॥ ६१ ॥
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ।
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवाञ्ज्वरः ॥ ६२ ॥
आमज्वरस्य लिङ्गानि, न दद्यात्तत्र भेषजम् ।
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ६३ ॥
[ शोधनं, शमनीयं च करोति विषमज्वरम्[१] ]

मुख से लालस्राव की अधिक प्रवृत्ति, वमन की इच्छा, आमाशय के हृदयसमीपस्थ भाग में पूर्णता की अनुभूति, अन्न के प्रति अरुचि, तन्द्रा, आलस्य, अजीर्ण, मुखवैरस्य, शरीर का भारीपन, क्षुधानाश या छींक का पूर्णतया रुक जाना, पुनः पुनः मूत्रत्याग होना, स्तब्धता (वायु के प्रतिलोम

१. आतङ्कदर्पणसम्मतोऽयं पाठः।

होने से आन्त्र में परिपूर्णतया या शरीर में व्याप्त आम दोष के कारण जकड़ाहट) तथा ज्वर की तीव्रता ये आमज्वर के लक्षण हैं। इस अवस्था में औषध न देनी चाहिये; क्योंकि सेवन की गई औषध ज्वर को और भी अधिक तीव्र कर देती है एवं शोधन या शमन करने वाली औषधियों का प्रयोग कराया जाय तो ज्वर विषमज्वर का रूप धारण कर लेता है ॥ ६१-६३ ॥

**ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ६४ ॥**

ज्वर के वेग का अधिक तीव्र होना, प्यास की प्रबलता, प्रलाप, तीव्र श्वास, भ्रम, मल, मूत्र, स्वेद, कफ तथा नासादिमल की सम्यक् प्रवृत्ति एवं वमन करने की इच्छा ये पच्यमान ज्वर के लक्षण हैं ॥ ६४ ॥

**क्षुत् क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ।**
**दोषप्रवृत्तिरष्टाहो[1] निरामज्वरलक्षणम् ॥ ६५ ॥**

( च. चि. अ. ३ )

क्षुधा की प्रवृत्ति, कृशता, शिर आदि अङ्गों में हल्कापन, मल, मूत्र, अपान वायु आदि की सम्यक् प्रवृत्ति तथा आठवाँ दिन ये निरामज्वर के लक्षण हैं ॥ ६५ ॥

चिकित्साविशेषार्थमामपच्यमाननिरामलक्षणान्याह—लालेत्यादि । ननु, 'न दद्यात्तत्र भेषजमि'ति विरुद्धं, द्विविधं हि भेषजमुक्तं चरकेण द्रव्यभूतमद्रव्यभूतं चेति; तत्र द्रव्यभूतं कषायादि, अद्रव्यभूतं लङ्घनस्वेदादि, अत्र लङ्घनादिकं षडङ्गार्धशृतं च प्रयुज्यते । उच्यते भेषजशब्देनात्रान्नपानसाधनव्यतिरिक्ता कल्पनोच्यते, न तु सामान्येनौषधमात्रं, कथमेष प्रतीतिरिति चेत्; तरुणज्वरे भेषजपाननिषेधेऽपि भेषजविधानदर्शनात् । एवं पच्यमानेऽपि बोद्धव्यं, तत्रापि सामतायाः सद्भावात् । क्षुदित्यादि । असमासकरणात् क्षुदादयो व्यस्तसमस्ता अष्टाहश्च पक्वलक्षणमिति[2] जेज्जटः । हरिचन्द्रस्त्वाह असत्यप्यष्टाहे क्षुदादिभिर्निरामत्वं दोषप्रवृत्त्या वा क्षुदाद्यभावेऽप्यष्टाहेनैव शिष्यहितैषितया कालं लक्षणं च निर्दिष्टवानिति । द्विविधा हि सामता-एका रसस्य, अपरा दोषस्य; रससामता तु मुखवैरस्यादिलक्षणा, दोषसामता तरुणस्वरूपा, साऽष्टाहेनैवापैति । अत्र च हरिचन्द्रेण हेतुरुक्तः—( 'सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि' इति[3] ) सप्तानां धातूनां धात्वग्निना सप्ताहेनामपाकादष्टाहेनैव निरामत्वमिति । रससामता त्वष्टाहात् परतोऽप्यनुवर्तते । एनमर्थं जेज्जटोऽपीच्छति, यदेवं लिखति चरकसुश्रुतटीकायां 'तरुणा सामताऽष्टाहादपैति, रससामता तु परतोऽप्यनुवर्तते' इति । एतत्प्रयोजनं च तरुणसामतायामौषधं नोपयुज्यते, रससामतायां तु पाचनं दीयते । अत एवाह चरकः-'ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् । पाचनं शमनीयं वा कषायं पाययेत्तु तम्' ( च. चि. अ. ३ ) इति । तथा, 'मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च । पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्' (सु. उ. अ. ३९) इत्यभिधायापि यत् सुश्रुतेनोक्तं 'सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम् । दशरात्रात् परं केचिद्दातव्यमिति निश्चिताः' (सु. उ. अ. ३९) इति; तेनैवं ज्ञापयति—सप्ताहादर्वाक् पाचनमपि न दीयत इति कार्तिककुण्डेनापि व्याख्यातमिति । ननु, 'ज्वरितं षडहेऽतीते' ( च. चि. अ ३ ) इति चरकवचनस्य 'सप्तरात्रात् परं' ( सु. उ. अ. ३९ ) इत्यादिना

१ 'दोषप्रवृत्तिरुत्साह' इत्यातङ्कदर्पणसम्मत पाठः ।
२. 'लक्षणमिति' इति क ख । ३. अयं पाठः क ख पुस्तकयोर्नोपलभ्यते ।

सुश्रुतवचनेन विरोधः, यतः षडहेऽतीते सप्तमदिनं भवति, तत्र कषायं विधत्त इति। उच्यते—षडहेऽतीते सप्तमे लध्वन्नप्रतिभोजितमष्टमे कषायं[1] पाययेदित्यष्टमपदलोपाद्योऽयं रसौदनवदिति चक्रः 'भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्' ( च. चि. अ. ३ ) इति दोषश्रुतेरुक्तसुश्रुतविरोधाच्च। प्रकारान्तरेणैनमर्थं कार्तिककुण्डोऽप्याह, तद्यथा—षडहेऽतीते इति ज्वरोत्पाददिनं परित्यज्य गणनात्, बस्तिदानदिनपरिहारेण[2] परिहारकालगणनावत्। एवं 'पाययेदातुरं साममौषधं सप्तमे दिने। शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत्' इत्येतदपि वचनं व्याख्येयम्। भट्टारहरिचन्द्रेणापि सप्तमदिने कषायपानं यद् व्याख्यातं तस्याय-मेवाभिप्रायो गवेषणीयः, सुश्रुतादिविरोधात्। चन्द्रिकाकारेणापि व्याख्यातम्, 'अचिररोगे दिनचतुष्टयवज्ज्वरस्य सप्ताहं सामताकालः, तत्र न पाचनं न वा शमनशोधने' इति। यत्तु पेयाद्यनन्तरं हारीतेनोक्तम् 'एतां क्रियां प्रयुञ्जीत षड्रात्रे सप्तमेऽहनि। पिबेत् कषायसंयोगा-ञ्ज्वरघ्नान् साधुसाधितान्' इति, तथा 'इति षड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। अतः परं पाचनीयं शमनं वा ज्वरे हितम्' इति खरनादवचनं च पूर्ववदष्टाहप्रतिपादकं द्रष्टव्यम्। अथवा पित्तज्वराभिप्रायेणैतद्वचनद्वयम्। यदाह सुश्रुत:-'सप्तरात्रात्परम्' इत्यारभ्य, यावत् 'पैत्तिके वा ज्वरेदेयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि भेषजं[3] दोषपाकतः' (सु. उ. अ. ३९) इति। [4]सप्ताहादर्वागपि यदंतरपाचनकषायपानमुक्तं तन्नात्युद्भूतसामतायां द्रष्टव्यम्। यदाह वाग्भटः 'सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लध्वन्नभुक्तस्य योज्यमामोल्बणेन तु॥ तीव्रज्वरपरीतस्य दोषवेगोदये यतः। दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि॥ अप-च्यमानं भेषज्यं भूयो ज्वलयति ज्वरम्' ( वा. चि. अ. १ ) इति। 'अयमर्थोऽभियुक्तैश्च कैश्चि-दुक्तश्चिकित्सकैः। सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे॥ निरामे शमनं, स्तब्धे सामे नौषधमाचरेत्' इति संक्षेपः। विस्तरस्तु कषायनिर्णयप्रकरणे द्रष्टव्यः। पक्वज्वरलक्षणेन जीर्णज्वरलक्षणमपि चिकित्सोचितं बोद्धव्यम्। यदुक्तं तन्त्रान्तरे 'आसप्तरात्रम्' इत्यादि। जतूकर्णेनाप्युक्तं,—जीर्णस्त्रयोदशदिवसः' इति। 'त्रिसप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः। प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते' इति तु तन्त्रान्तरमतिपुराणाभिप्रायेण[5] द्रष्टव्यम्॥

**विमर्शः**—पाचकाग्नि की दुर्बलता से अपरिपक्व आमाशयस्थित दूषित आदि धातु रस को ही आम कहते हैं—**ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्टमामाशयगतं रसमामं प्रचक्षते॥**

यह अपरिपक्व तथा दुष्ट रसधातु रक्त के साथ मिलकर सम्पूर्ण शरीर में परिभ्रमण करता हुआ जिस ज्वर को उत्पन्न करता है उसे आमज्वर कहते हैं। आमाशय में पिच्छिल श्लेष्मा की उपस्थिति के कारण वमन करने की इच्छा बनी रहती है।

**न दद्यात्तत्र भेषजम्**—द्रव्यभूत तथा अद्रव्यभूत भेद से भेषज दो प्रकार का होता है। द्रव्यभूत मे कषाय आदि तथा अद्रव्यभूत से लंघन तथा स्वेदन आदि का ग्रहण होता है। प्रकृत मे भेषज मे द्रव्यभूत औषध का ही निषेध समझना चाहिये। द्रव्यभूत औषध में भी मुख्यतया कषायपान का ही निषेध है; क्योंकि वह मात्रा में अधिक होने के कारण गुरु एवं दुर्जर होता है एवं इससे आम की अधिक वृद्धि होती है और ज्वर बढ जाता है। षडङ्गपानीय आदि लघु

---

१. 'पदलोपात्' इति क ख। २. 'बस्तिकालपरिहारेण कालगणनावत्' इति क। 'बस्तिकाल-परिमाणेन परिहारकालगणनावत्' इति ख। 'यथा सुश्रुतोक्तत्र्यहपरिहारकाल एव बस्तिदानदिनं त्यक्त्वा चरकेण द्विगुणः परिहारकाल उक्त' इति वृन्दटीकायां श्रीकण्ठदत्तः। ३. 'दोषपाचनम्' क ख। ४. 'सप्ताहात् परतोऽपि' इति क ख। ५. 'तन्त्रान्तरवचनं पुराणाभिप्रायेण' इति क।

भेषज तथा स्वल्प मात्रा में प्रयुक्त रसौषधियों के पाचन में कोई कठिनाई नहीं होती अतः वे कोई हानि भी नहीं करती प्रत्युत लाभ ही होता है।

क्षुत् आदि तथा अष्टाह पृथक् पृथक् एवं सम्मिलित रूप में भी ज्वरोत्पादक दोष की पक्वावस्था के द्योतक होते हैं। तात्पर्य यह कि आठ दिन से पूर्व भी यदि क्षुत्क्षामता आदि या दोषप्रवृत्ति के लक्षण होते है तब भी उसे निराम समझना चाहिये; क्योंकि दोष की अल्पता, लंघन तथा रसौषधि के सेवन से ज्वर आठ दिन से पूर्व भी निराम हो जाता है। हरिचन्द्र ने भी—

**सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि ॥**

प्रायः शब्द द्वारा यह स्पष्ट कर दिया है कि कदाचित् आठ दिन के पूर्व भी ज्वर निराम हो सकता है। इसी प्रकार क्षुत्क्षामता तथा दोषप्रवृत्ति ( अपानवायु आदि का निस्सरण ) न होने पर भी आठ दिन का काल व्यतीत हो जाने मात्र से ज्वर को निराम समझना चाहिये।

रससामता तथा दोषसामता भेद से सामता दो प्रकार की होती है। इस विषय में हरिचन्द्र जी कहते हैं कि दोष और धातुगत सामता आठ दिन में नष्ट हो जाती है किन्तु रस की सामता इसके पश्चात् भी रह सकती है। जेज्जट ने भी इस मत का समर्थन किया है। **'तरुणा सामताऽष्टाहादपैति रससामता तु परतोऽप्यनुवर्तते'**। दोष की सामता में औषध का निषेध और केवल रस की सामता में पाचन-प्रयोग का विधान करना ही इस द्विविध सामता के कथन का प्रयोजन है। दोषों की निरामता प्रायः एक सप्ताह में नष्ट हो जाती है जिसका ज्ञान क्षुत्क्षामता आदि लक्षणों से किया जाता है। रस एवं कदाचित् दोषों की भी सामता सप्ताह के पश्चात् भी अवशिष्ट रह जाता है, अतएव उक्त अवस्था में पाचन या शामक औषधियों का प्रयोग किया जाता है।

चरक कहते हैं कि ज्वर से पीडित रोगी को ६ दिन व्यतीत हो जाने पर सातवें दिन लघु अन्न देकर पाचन या शमन औषध देनी चाहिये—

**ज्वरितं षडहेऽतीते लघ्वन्नप्रतियोजितम्। पाचनं शमनीयं वा कषायं पाययेत्तु तम् ॥**

इसी प्रकार सुश्रुत ने भी कहा है कि—ज्वर के मृदु होने पर तथा शरीर के लघु होने और मलों की प्रवृत्ति होने पर दोष को निराम समझकर औषध प्रदान करना चाहिये—

**मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥**

इसके आगे सुश्रुत ने जो यह कहा है कि—कोई लोग सात दिन और कोई दस दिन के पश्चात् औषध देना पसन्द करते हैं—

**सप्तरात्रात्परं केचिन्मन्यन्ते देयमौषधम्। दशरात्रात्परं केचिद्दातव्यमिति निश्चिताः ॥**

इसका तात्पर्य यही है कि साधारणतया एक सप्ताह में दोष निराम हो जाता है अतः आठवें दिन औषध देनी चाहिये। यदि फिर भी सामता के लक्षण बने रहें तो दश दिन के बाद औषध देनी चाहिये। सात दिन के बाद हर हालत में पाचन का प्रयोग कर सकते हैं, सात दिन व्यतीत होने से पूर्व पाचन का प्रयोग भी नहीं किया जा सकता। कार्तिककुण्ड ने भी इसी प्रकार की व्याख्या की है।

अब यहाँ सन्देह होता है कि **'ज्वरितं षडहेऽतीते'** इस चरक-वचन का सुश्रुत के **'सप्तरात्रात्परम्'** आदि वचन के साथ विरोध आता है; क्योंकि चरक ६ दिन बीतने पर सातवें दिन और सुश्रुत सात दिन बीतने पर आठवें दिन कषाय देने का उपदेश करते हैं। इस पर कहते हैं कि ६ दिन बीतने पर सातवें दिन रोगी को लघु अन्न देकर आठवें दिन कषायपान कराना चाहिये ऐसा अर्थ करने से विरोध की आशंका नहीं रहती। खाली पेट पर औषध देना भी हानिकर है अतएव चरक ने स्वयं **'लघ्वन्नप्रतिभोजितम्'** ऐसा कहा है। कार्तिककुण्ड का कहना है कि ज्वरोत्पत्ति के दिन को छोड़कर आगे ६ दिन की गणना से सातवें दिन कषायपान कराना चाहिए। इस अर्थ से भी कोई दोष नहीं रहता।

**पाययेदातुरं साममौषधं सप्तमे दिने। शमनेनाथवा दृष्ट्वा निरामं तमुपाचरेत् ॥**

इस वचन की व्याख्या भी उपर्युक्त प्रकार से ही करनी चाहिये। भट्टार हरिचन्द्र ने जो सातवें दिन कषायपान का निर्देश किया है उसकी संगति भी उक्त विधि से ही लगानी चाहिये। चन्द्रिकाकार भी सात दिन तक ज्वर की समावस्था मानते हैं और उस अवधि में पाचन या शमनीय औषधों का सर्वथा निषेध भी करते हैं—**अचिरोगे दिनचतुष्टयवज्ज्वरस्य सप्ताहं सामताकालः, तत्र न पाचनं न वा शमनशोधने**'। इसके अतिरिक्त हारित ने जो—**एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमेऽहनि। पिबेत् कषायसंयोगाज्ज्वरघ्नान् साधुसाधितान्** के द्वारा पेया के पश्चात् सातवें दिन कषाय-पान का निर्देश किया है, तथा खरनाद ने भी—

**इति षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। अतः परं पाचनीयं शमनं वा ज्वरे हितम् ॥**

**इस वचन के द्वारा सातवें दिन ही कषायपान की अनुमति दी है उसकी व्याख्या भी पूर्ववत् करके आठवें दिन ही कषायपान का नियम समझना चाहिये। अथवा इन दोनों वचनों को पित्तज्वरपरक समझ सकते हैं क्योंकि सुश्रुत ने 'सप्तरात्रात्परम्' के पश्चात् पित्तज्वर में सप्ताह से पूर्व भी औषधपान का निर्देश किया है—**

**पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि भेषजं दोषपाकतः ॥**

अत्यधिक सामता होने पर पित्तज्वर में भी सप्ताह से पूर्व औषध नहीं देनी चाहिये। अल्प सामता में दे सकते हैं क्योंकि उसका पाचन शीघ्र हो जाता है। वस्तुतः सर्वथा दोष की सामता नष्ट होने पर ही कषायपान कराना हितकर होता है। अतएव वाग्भट ने कहा—

**सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ॥**
**तीव्रज्वरपरीतस्य दोषवेगोदये यतः। दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि।**
**अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ॥** ( वा० चि० अ० १ )

अर्थात् कतिपय आचार्य सात दिन बाद, कतिपय दस दिन बाद और कतिपय आचार्य आम की अधिकता न होने पर लघु अन्न सेवन कराकर औषधपान कराना उचित समझते हैं किन्तु आम की प्रबलता में कदापि न देनी चाहिए। तीव्रज्वर से पीडित रोगी में आम दोष के वेग प्रबल होने पर भी रोगी को औषध न देनी चाहिये। तन्द्रा और निश्चलता को करने वाले अत्यधिक दोष—सञ्चय होने पर भी औषध न देनी चाहिये; क्योंकि उक्त अवस्थाओं में दी गई औषध का परिपाक नहीं होता एवं वह अपरिपक्व औषध लाभ न कर ज्वर की अधिक वृद्धि में ही सहायक होती है। सप्ताह के पश्चात् किस अवस्था में कैसी औषध देनी चाहिये, इसका नियम बताते हुए कहते हैं—

**सप्ताहात्परतोऽस्तब्धे सामे स्यात्पाचनं ज्वरे। निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥**

अर्थात् दोषप्रकोप की प्रबलता के अनुसार सप्ताह के पश्चात् सामता या निरामता दोनों ही हो सकती है। यदि लङ्घन, स्वेदन आदि से मलों की स्तब्धता नष्ट हो जाने पर भी दोषों की सामता के लक्षण मिलें तो पाचन का प्रयोग करना चाहिये। यदि दोष भी निराम हो गये हों तो शमन औषध प्रयोग में लानी चाहिये। किन्तु मलों की स्तब्धता तथा दोषों की सामता बनी रहने पर किसी प्रकार की भी औषध का प्रयोग न करना चाहिये।

प्रसंग से चिकित्सासौकर्यार्थ जीर्णज्वर का भी लक्षण कहा जाता है, जो कि निम्न है—

**त्रिसप्ताहे व्यतीते तु ज्वरो यस्तनुतां गतः। प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥**

**अर्थात् तीन सप्ताह पर्यन्त ज्वर रहने के उपरान्त जब ज्वर का वेग धीमा पड जाता है एवं प्लीहा की वृद्धि और अग्निमान्द्य विशेष रूप से हो जाता है तब उसे जीर्णज्वर कहते हैं। वस्तुतः यह लक्षण अति पुराण ज्वर के अभिप्राय से कहा गया है। सामान्यतः पक्व, जीर्ण और पुराण**

ज्वर पर्यायवाचक ही होते हैं और सात दिन तक तरुण ज्वर, बारह दिन तक तथा इससे अधिक दिन का होने पर जीर्ण या पुराण ज्वर कहलाता है।

आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः। मध्यं द्वादशरात्रं तु पुराणमत उत्तरम् ॥'

तीन सप्ताह के पश्चात् भी रहने वाले को कुछ लोग अतिपुराण भी कहते हैं। जीर्ण मलेरिया ( Chronic Malaria ) एवं कालाजार आदि को जीर्णज्वर की श्रेणी में समझना चाहिए।

ज्वरस्य साध्यलक्षणमाह—

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः।** ( च. चि. अ. ३ )

बलवान् शरीर एवं अल्पदोष वाले रोगियों का उपद्रवरहित ज्वर साध्य होता है॥

ज्वरस्य साध्यलक्षणमाह—बलवत्स्वित्यादि। बलवत्सु पुरुषेषु साध्यः, यदुक्तं—'बलाधिष्ठानमारोग्यम्' ( च. चि. अ. ३ ) इति। अल्पदोषेषु नातिप्रबलदोषेषु। उनुपद्रव इति ज्वरस्योपद्रवाः कासादयः। यदुक्तं तन्त्रान्तरे 'कासो मूर्च्छाऽरुचिश्छर्दिस्तृष्णातीसाविड्ग्रहाः। हिक्काश्वासाङ्गभेदाश्च ज्वरस्योपद्रवा दश' इति॥

विमर्शः—बलवान् व्यक्ति ही आरोग्य लाभ कर सकता है 'बलाधिष्ठानमारोग्यम्' ( चरक ) अतः बलवान् रोगियों में ज्वर साध्य होता है। बल से केवल शारीरिक बल का ही नहीं अपि तु व्याधि प्रतिरोध-क्षमता का भी ग्रहण करना चाहिये। खाँसी, मूर्च्छा, अरुचि, वमन, प्यास, अतिसार, मलविबन्ध, हिचकी, श्वास तथा अङ्गों में अत्यधिक पीड़ा इन ज्वर के दस उपद्रवों से रहित ज्वर भी साध्य होता है।

ज्वरस्यासाध्यतां निरूपयति—

**हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः॥ ६६॥**
**ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः।**
**ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः॥ ६७॥**
**असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः।** ( च. चि. अ. ३ )
**गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया॥ ६८॥**
**आनद्धत्वेन चात्यर्थं श्वासकासोद्गमेन च।** (सु.उ.तं.अ. ३९)
**आरम्भाद्विषमो यस्तु यश्च वा दैर्घरात्रिकः॥ ६९॥**
**क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति[1] तम्।**
**विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा॥ ७०॥**
**शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः।**
**यो हृष्टरोमा रक्ताक्षो हृदि संघातशूलवान्॥ ७१॥**
**वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम्।**
**हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम्॥ ७२॥**

१. 'हन्ति मानवम्' इति पा०।

सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः ।
'हतप्रभेन्द्रियं क्षीणमरोचकनिपीडितम् ॥ ७३ ॥
गम्भीरतीक्ष्णवेगार्तं ज्वरितं परिवर्जयेत् ।' (सु.उ.तं.अ. ३९)

जो ज्वर बहुत अधिक एव बलवान् कारणों से उत्पन्न हो, जिसमें लक्षणों की प्रचुरता हो तथा जिससे शीघ्र ही इन्द्रियों की ज्ञानशक्ति नष्ट हो जाये वह प्राणघातक या असाध्य होता है। क्षीण तथा शोथयुक्त रोगी का ज्वर भी असाध्य होता है। गम्भीर ( अन्तर्वेग अथवा गूढ लक्षणों वाला ) ज्वर दीर्घकाल तक बने रहने पर तथा जिसमें अकस्मात् बालों में माँग निकली हुई दिखाई दे। ऐसा बलवान् ज्वर भी असाध्य होता है। अन्तर्दाह, प्यास, मल और वायु का अत्यन्त अवरोध, श्वास तथा कास की अधिकता से गम्भीर ज्वर का ज्ञान करना चाहिये। आरम्भ से ही यदि ज्वर विषम स्वरूप का हो अथवा जो दीर्घकालानुबन्धी हो वह भी असाध्य होता है। क्षीण एव अतिरूक्ष शरीर वाले रोगी का गम्भीर या अन्तर्दाह ज्वर भी असाध्य होता है। जो रोगी विह्वल होकर मूच्छित हो जाता है और जो पड़ा ही रहता है, अर्थात् उठने की जिसमें सामर्थ्य नहीं रहती एवं जो बाहर से शीत के कारण पीडित हो और अन्दर उसके उष्णता रहे वह भी असाध्य ही होता है, जिस ज्वर के रोगी के रोम खड़े हों, आँखें लाल हों, हृदय में पाषाण आदि के आघात के समान अथवा विविध प्रकार का शूल हो तथा जो मुख से ही श्वास लेता हो उसका भी ज्वर असाध्य ही होता है। हिचकी, श्वास तथा प्यास से युक्त, मूच्छित तथा जिसके नेत्र इधर-उधर चल रहे हों एवं जो रोगी निरन्तर दीर्घ श्वास ले रहा हो व क्षीण हो उसको भी ज्वर नष्ट कर देता है। जिसकी प्रभा एव इन्द्रियों की विषयग्रहण शक्ति नष्ट हो गयी हो, जो क्षीण तथा अरुचि से पीडित हो एव जो गम्भीर या अन्तर्दाह ज्वर के तीक्ष्ण वेग से पीडित हो वह भी असाध्य होता है ॥ ६६–७३ ॥

ज्वरस्यासाध्यलक्षणान्याह–हेतुभिरित्यादि। ननु, यो हेतुभिर्बलिभिर्बहुभिश्चोपजायते स बहुलक्षण एव भवति, तत् किं बहुलक्षणवचनेन? उच्यते-यथास्वहेतुकुपिता दोषाः सर्वस्यैव रोगस्य हेतवो भवन्ति, प्राक्तनकर्मापेक्षया तु यदा विशिष्टा सामग्रीं सम्प्राप्तिलक्षणामासादयन्ति तदा ज्वरमापादयन्ति, तथा दूष्यादिसहकारिकारणसान्निध्यासान्निध्याभ्यां बहुलक्षणतामल्पलक्षणतां च कुर्वन्ति। तथाहि तन्त्रान्तरम् 'एकं द्वौ त्रीन् बहून् वाऽपि देहे धात्वादियोगतः। दर्शयन्ति विकारांस्ते कुपिताः पवनादयः' इति। अथवा 'विकृतिविषमसमवायाद्बहुहेतुरप्यल्पलक्षणोऽल्पहेतुरपि बहुलक्षण इति। प्राणान्नकृदिति छेदः। शीघ्रमिन्द्रियनाशन इति उत्पन्नमात्र एव चिकित्स्यमानोऽपीन्द्रियशक्तिं रूपादिग्रहणलक्षणामुपहन्ति सोऽप्यसाध्यो नतूपेक्षया; अन्येऽपि रोगा उपेक्ष्यमाणा इन्द्रियशक्तिमुपघ्नन्ति असाध्यतां चाधिरोहन्ति। एवं बहुलक्षणोऽप्यादावेव चिकित्स्यमान एव बोद्धव्यः। इन्द्रियाणि चैकादश बोद्धव्यानि सांख्यसिद्धान्तेन तथा चरकसुश्रुतनिर्दिष्टत्वात्; चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनं चेति बुद्धीन्द्रियाणि, हस्तपादगुदोपस्थजिह्वाः कर्मेन्द्रियाणि, उभयात्मकं मनः; एवमन्यत्रापि द्रष्टव्यम्। ज्वरः क्षीणस्य शूनस्येत्यपरमसाध्यलक्षणम्। गम्भीरो दैर्घरात्रिक इति गम्भीरोऽन्तर्धातुस्थः; अथवा गम्भीर इव गम्भीरः, यत्र वातादीनां निश्चयो न शक्यते कर्तुम्; अन्ये त्वाहुः–गम्भीरोऽन्तर्वेगः। दैर्घरात्रिक इति 'दीर्घरात्रानुबन्धी' इति जेज्जटः 'दीर्घां मरणरूपां रात्रिमनुवर्तते इति दैर्घरात्रिकः'—इति चक्रः, असाध्य इत्यर्थः। अत्र पक्षे दैर्घरात्रिक इति पूर्वेण सम्बध्यते, असाध्य इति परेण। केशसीमन्तकृदिति। अकस्मात् केशेषु सीमन्तान् यः

१. 'क्षाम' इति पा०। २. 'अ.प च' इति पा०।

करोति । उक्तं हि तन्त्रान्तरे, 'केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ । लुनन्ति[1] चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे' इति । गम्भीरार्था ये जेज्जटादिभिर्व्याख्यातास्तेषु मध्येऽत्र गम्भीरोऽन्तर्वेग इत्ययमर्थो माधवकरस्याभिमतः, अत एवासौ तदनन्तरं सौश्रुत गम्भीरलक्षणं लिखति-गम्भीर इत्यादि । य एव चरकेऽन्तर्वेगः स एव सुश्रुते गम्भीरः पठितः; तुल्यलक्षणत्वात्, पृथक्पाठाभावाच्चेति । आनद्धत्वेन चेति[2] बद्धदोषत्वेन । आरम्भादित्यादि । आरम्भादुत्पादात् प्रभृति यस्य विषमज्वरः सोऽसाध्यः, यस्य तु नित्यज्वरिणो ज्वरोत्सृष्टस्य वाऽपचारादिना विषमः स साध्य एव । एतच्च विषमत्व सततादिरूपं बोद्धव्य, न तु विषमत्वमात्रेण, वातिकज्वरेऽपि प्रसङ्गादिति । दैर्घरात्रिको व्याहृत एव, न चास्य पुनरुक्तत्वं, तन्त्रान्तरीयवाक्यत्वादधिकार्थप्रतिपादनार्थं बुद्ध्याऽपि लिखितम्; एवं गम्भीरेऽपि वाच्यम् । 'अतिरूक्षस्य' इत्यत्र 'अनिमिषस्य' इति पाठान्तरे सदा स्फारितनेत्रस्येत्यर्थः । विसंज्ञः विह्वलः, ताम्यते मुह्यति । शेते निपतित इति शयितो निपतित एवास्ते न चोत्थातुं समर्थः । शीतार्दितोऽन्तरुष्णश्चेति शीतार्दितो बहिः, अन्तरुष्णोऽन्तर्दाहवान् । हृष्टरोमा रोमाञ्चितगात्रः । हृदि संघातशूलवानिति संघातरूपेण वस्तुना अष्ठीलिकादिनाऽऽक्रान्तमिव हृदय मन्यते यः स तथा; अन्ये त्वाहुः- नानाप्रकारकशूलवानिति । वक्त्रेण चैवोच्छ्वसितीत्येवकारेण नासिकां व्यवच्छिनत्ति व्यादितास्यप्रतिपादनार्थं, खरश्वास इत्यर्थः । हिक्केत्यादि । हिक्कादिभिर्मिलितैरेकेनापि बलवताऽसाध्यत्वम् । मूढं मोहयुक्तम् । विभ्रान्तलोचनं भ्रान्तप्रेक्षणं, चलितनेत्रं वा । सन्ततोच्छ्वासिनं[3] निरन्तरखरश्वासयुक्तम् । हतेत्यादि । हतप्रभाणि हतशक्तीनि स्वविषयाग्राहीणि चक्षुरादीनि यस्य स तथा; अथवा हता प्रभा दीप्तिरिन्द्रियाणि च यस्य स तथा । 'अरोचकनिपीडितम्' इत्यत्र जेज्जटः पाठान्तरद्वय पठति-'दुरात्मानमुपद्रुतम्' इति, व्याचष्टे च-दुरात्मानं दुष्टान्तःकरणम्, उपद्रुतमिति श्वासादिभिरुपद्रवः; 'दुरात्मभिरुपद्रुतम्' इति पाठान्तरे तु राक्षसादिभिर्जुष्टमित्यर्थः । एषामसाध्यलक्षणानामुपलक्षणत्वादन्यान्यपि तन्त्रान्तरेषु द्रष्टव्यानि । तद्यथा-'प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना । सुघोरं ज्वरमासाद्य स[4] जीवमपसृज्यते ॥ ज्वरः पौर्वाह्णिको यस्य शुष्ककासश्च दारुणः । बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ ज्वरो यस्यापराह्णे तु श्लेष्मकासश्च दारुणः । बलमांसविहीनस्य यथा प्रेतस्तथैव सः ॥ सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः । विश्लेषण च सन्धीनां मुमूर्षोरुपजायते ॥ गोसर्गे[5] वदनाद्यस्य स्वेदः प्रच्यवते भृशम् । लेपज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम् । मृत्युश्च तस्मिन् बहुपिच्छिलत्वाच्छीतस्य जन्तोः परितः सरत्वात् । स्वेदा ललाटे हिमवज्ज्वरस्य शीतार्दितस्यातिसुपिच्छिलश्च ॥ कण्ठे स्थितो यस्य न याति वक्षो नूनं यमस्यैति गृहं स मर्त्यः ॥ स्रुतस्वेदो ललाटाद्यः श्लथसन्धानबन्धनः । मुह्येदुत्थाप्यमानस्तु स स्थूलोऽपि न जीवति ॥ यस्य स्वेदोऽतिबहुलः पिच्छिलो याति सर्वतः । रोगिणः शीतगात्रस्य तदा मरणमादिशेत्'-इति । 'आधानजन्मनिधने प्रत्यराख्ये[6] विपत्करे । नक्षत्रे व्याधिरुत्पन्नः क्लेशाय मरणाय वा ॥ ज्वरस्तु जातः षड्रात्राद्श्विनीषु निवर्तते' ( वृ. वा. नि. अ. १ ) इत्यादिना ग्रन्थेन नक्षत्रभेदेन ज्वरस्य साध्यत्वासाध्यत्वं यदभिहितं तद्धारीतवृद्धवाग्भटयोर्द्रष्टव्यम्, इह तु विस्तरभयान्न लिखितम् । सन्निपातासाध्यप्रकरणं यथा-'पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् । हन्ति विमुञ्चति वाऽऽशु त्रिदोषजो धातुमलपाकात्'-इति । सप्ताहाद्वाताधिकः, दशाहात्पित्ताधिकः, द्वादशाहात्कफाधिकः, पित्ताधिकवद्वातपित्ताधिकः, कफाधिक-

---

१. 'चलन्ति' इति क ख । २. 'विबद्धमलत्वेन' इति पा. । ३. 'निरन्तरोच्छ्वासिनम्' इति क ख । ४. 'न जीवेन्न च मुच्यते' इति क ख । ५ गोसर्गे प्रत्यूषे । ६. 'निधनं जन्मतः सप्तमं, प्रत्यरं पञ्चमं, विपत्करं तृतीयम्' इत्यष्टाङ्गसंग्रहव्याख्यायामिन्दुः ।

बद्धातकफाधिकः, योगवाहित्वाद्वायोः। यदाह[1] चरकः-योगवाही परं वायुः संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात्'-इति (च. चि. अ. ३)। धातुपाकाद्धन्ति, मलपाकाद्विमुञ्चतीति व्यवस्थितविकल्पः; धातुमलपाकविकल्पे[2] च दैनमेव हेतुः। उत्तरोत्तर-रोगवृद्धिबलहानिभ्यां शुक्रादिधातुर्सहिनमूत्रादिना च धातुपाको ज्ञेयः, अन्यथा तु मलपाकः; यदुक्तं 'निद्रानाशोहृदिस्तम्भो विष्टम्भो गौरवारुची। अरतिर्बलहानिश्च धातूनां पाकलक्षणम्॥ दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः। इन्द्रियाणां च वैमल्यं दोषाणां पाकलक्षणम्'-इति। ननु, तरतमभावात्[3] स्थिरशीघ्रमध्यमशक्तित्वाद्दोषाणां कथं सप्ताहादिनियम इति चेत्। न, तथास्वभावाद्व्याधेः, विचित्रा हि प्रतिरोगं स्वभावाः; यथाऽग्निरोहिणी सप्ताहेन हन्ति न तथाऽन्ये विकारा इति। तत्र 'सप्तमी द्विगुणा चैव नवम्येकादशी तथा। एषा त्रिदोषमर्यादा मोक्षाय च वधाय च' (वा. नि. अ. २) इति हारितवचनसंवादार्थमेवं व्याचक्षते—दशमी-प्रत्यासत्त्या नवमी, द्वादशीप्रत्यासत्त्या एकादशी च गृह्यते; ततो[4] वृद्धयेति पदमावर्त्य सर्वत्र द्वैगुण्यं कार्यम्। एवं, सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा। पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा' (सु. उ. अ. ३९) इत्यत्र सुश्रुतवाक्ये पुनःशब्देन द्वैगुण्यमिति कार्तिककुण्डो व्याख्यातवान्। एवं 'दशद्वादशसप्ताहैः पित्तश्लेष्मानिलाधिकः। दग्ध्वोष्मणा धातुमलान् हन्ति मुञ्चति वा ज्वरः' (वा.नि.अ. २) इत्यत्राधिकशब्दमावर्त्य क्रियाविशेषणं कृत्वा द्वैगुण्यं व्याख्यातम्। तथा,'वातपित्तकफैः सप्तदशद्वादशवासरान्। प्रायोऽनुयाति मर्यादा मोक्षाय च वधाय च' (वा. नि. अ. २) इत्यत्राग्निवेशमते प्रायोग्रहणेन द्वैगुण्यमिति। ननु, सप्तमी-त्यादौ कथं तर्हि दशविंशतिद्वादशचतुर्विंशतीनां ग्रहणमिति चेत्। उच्यते—एकादशीत्यत्र एकेति पदमावर्तनीय, तेन नवमी एकेति दशमी लभ्यते, एकादशी एकेति द्वादशी लभ्यते, ततः सर्वत्र द्वैगुण्यम्। तथाशब्दः समुच्चये, तेन सप्तमी गृह्यते सा द्विगुणा च; एवं नवम्या-दिषु योज्यम्। चतुर्विंशत्यधिकस्तु मर्यादादिवसो नास्ति, तत्प्रतिपादकागमादर्शनात्॥६६-७२॥

**विमर्शः**—अनेक कारणों से उत्पन्न होने वाला ज्वर या अन्य व्याधि बहुलक्षण होती ही है, पुनः बहुलक्षण कहने की क्या आवश्यकता है? इस पर कहते हैं कि जिस प्रकार अपने हेतुओं से प्रकुपित हुए दोष सभी व्याधियों के जनक होते हैं, किन्तु कुछ अन्य अनुकूल परिस्थितियों से सम्प्राप्ति रूप विशिष्ट सामग्री को प्राप्त करके ज्वर या किसी अन्य रोग को ही उत्पन्न करते हैं उसी प्रकार ये दोष दूष्यरूप सहकारी कारणों की प्राप्ति या अप्राप्ति से बहुलक्षण या अल्पलक्षण-वाले ज्वर को उत्पन्न करते हैं। अर्थात् अनेक कारणों से प्रकुपित दोषों को यदि अनुकूल दूष्य का साहचर्य मिल जाता है तो व्याधि बहुलक्षण होती है अन्यथा नहीं। इस प्रकार **'बहुभिर्हेतुभिः'**, के साथ बहुलक्षण कहना असंगत या पुनरुक्ति से युक्त नहीं है। तन्त्रान्तर में कहा भी है कि कुपित हुए वात आदि दोष दूष्यादि के सान्निध्य या असान्निध्य से एक, दो, तीन या बहुत लक्षणों को उत्पन्न करते हैं—**'एकं द्वौ त्रीन् बहून् वापि देहे धात्वादियोगतः। दर्शयन्ति विकारास्ते कुपिता पवनादयः॥** अथवा विकृतिविषमसमवायारब्ध होने से बहुत हेतुओं वाला अल्पलक्षण एवं अल्प हेतुवाला ज्वर बहुलक्षण भी हो सकता है।

**असाध्य ज्वर—**

जो ज्वर उत्पन्न होते ही चिकित्सा करने पर भी इन्द्रियों की शक्ति का नाश कर देता है वह असाध्य होता है। श्रोत्र, त्वचा, चक्षु, रसना तथा घ्राण ये पांच ज्ञानेन्द्रियाँ हैं। हाथ, पैर, वाणी, गुद तथा उपस्थ ये पाँच कर्मेन्द्रियाँ हैं। मन उभयात्मक है; दोनों पर नियन्त्रण रखता है। इस प्रकार ग्यारह इन्द्रियाँ होती हैं। इनमें से किसी को नष्ट करने वाला ज्वर असाध्य होता है।

१. अयं पाठः क ख पुस्तकयोर्नोपलभ्यते। २. 'धातुमलपाकमेके' इति क ख।
३. 'तरतमादिभावव्यवस्थितशीघ्रमध्यमन्दशक्तित्वात्' इति पा०। ४. 'तत्र' इति क।

बालों में अनायास माँग का प्रतीत होना अर्थात् बिना कंघी किए ही कंघी किया प्रतीत होना भी ज्वर की असाध्यता का निदर्शक है। तन्त्रान्तर में कहा भी है—

**केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ।**
**लुनन्ति चाक्षिपक्ष्माणि सोऽचिराद्याति मृत्यवे ॥**

साधारण अवस्था में ज्वर के अन्त में या ज्वरमोक्ष के बाद अपथ्य सेवन करने से विषम ज्वर की उत्पत्ति होती है, किन्तु यदि वह प्रारम्भ से ही अनियत सतत आदि स्वरूप का रहे तब भी असाध्य होता है। वातिक नित्य ज्वर में होने वाली विषमारम्भविसर्गिता असाध्यता-निदर्शक नहीं होती।

इन असाध्य लक्षणों के अतिरिक्त तन्त्रान्तर में ज्वर के और भी असाध्य लक्षण मिलते हैं जिनका वर्णन **'प्रेतैः सह पिबेन्मद्यम्'** से लेकर **'षड्रात्रादश्विनीषु निवर्तते'** तक मधुकोशकार ने किया है। विस्तारभय से उन सबका वर्णन यहाँ अपेक्षित नहीं है।

सन्निपात ज्वर की असाध्यता का सकारण वर्णन निम्न प्रकार से मिलता है—

**पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात्।**
**हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात् ॥**

अर्थात् यदि धातुपाक होने लगे तो सात दिन में वातोल्बण, दस दिन में पित्तोल्बण, बारह दिन में कफोल्बण ( तथा दस दिन में वातापित्तोल्बण, बारह दिन में वातकफोल्बण ) ज्वर मार डालता है। यदि मलपाक हो तो रोगी स्वस्थ हो जाता है। वायु के योगवाही होने से वातपित्तोल्बण में पित्त के समान और वातकफोल्बण में कफ के समान समय अपेक्षित होता है। चरक ने वायु के योगवाहित्व का वर्णन करते हुए कहा है—

**योगवाहः परं वायुः संयोगादुभयार्थकृत्। दाहकृत्तेजसा युक्तः शीतकृत्सोमसंश्रयात् ॥**

उत्तरोत्तर रोगवृद्धि बलहानि तथा रसादिशुक्रान्त धातुओं में से किसी का मूत्र आदि के साथ निकलना तथा निद्रानाश आदि लक्षणों का होना धातुपाक के लक्षण हैं। जैसे कहा भी है—

**निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवारुची। अरतिर्बलहानिश्च धातूनां पाकलक्षणम् ॥**

अर्थात् निद्रानाश (Insomnia), हृदयप्रदेश में जकड़ाहट, विष्टम्भ, भारीपन अरुचि, किसी काम में मन न लगना तथा बल का नाश ये धातुपाक के लक्षण हैं। इसके विपरीत—

**दोषप्रकृतिवैकृत्यं लघुता ज्वरदेहयोः। इन्द्रियाणां च वैमल्यं दोषाणां पाकलक्षणम् ॥**

अर्थात् जिस दोष से ज्वर उत्पन्न हुआ हो उसकी प्रकृति के विपरीत लक्षणों का उत्पन्न होना या दोष के लक्षणों में कमी न होना, ज्वर और शरीर में हलकापन तथा इन्द्रियों में विषयग्रहण की उचित शक्ति का होना ये दोषपाक या मलपाक के लक्षण हैं।

यद्यपि दोष तरतमभाव से स्थिर, मध्य तथा शीघ्रशक्ति वाले हो सकते हैं अतः सप्ताहादि नियम करना असंगत प्रतीत होता है तथापि व्याधि का स्वभाव ही वैसा होने से उक्त दोष नहीं आता। रोगों के स्वभाव विचित्र ही होते हैं, जैसे अग्निरोहिणी एक सप्ताह में ही प्राणहरण कर लेती है। कुछ ज्वरों में पूर्वोक्त सप्ताहादि काल की द्विगुण काल-मर्यादा भी होती है। यथा—**सप्तमी द्विगुणा चैव नवम्येकादशी तथा। एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥**

पूर्वोक्त सात, दस और बारह के स्थान पर इस श्लोक में सात, नौ और ग्यारह दिन का उल्लेख है। इस मतभेद के समाधान के लिए एकादशी शब्द में आए 'एक' शब्द की द्विरावृत्ति कर उसका नौ और ग्यारह के साथ संयोग कर नौ एक = दस तथा ग्यारह और एक = बारह अर्थ कुछ टीकाकार करते हैं। मधुकोश में इन मतान्तरों का उल्लेख विशद वर्णित है। किन्तु दोनों ही प्रकार मिलते हैं तथा कभी-कभी अति सामीप्य के कारण नौ और दस तथा ग्यारह और बारह में अन्तर

करना कठिन भी हो जाता है अतः दोनों मत उचित हैं। उन पर शाब्दिक शास्त्रार्थ व्यर्थ है। उसी प्रकार द्विगुण शब्द को त्रिगुण आदि का उपलक्षण मानना चाहिए क्योंकि प्रत्यक्षतः कभी-कभी इस प्रकार के ज्वर मिलते हैं। प्रत्यक्ष विरुद्ध होने से मधुकोशकार का **'चतुर्विंशत्यधिकस्तु मर्यादादिवसो नास्ति'** यह वचन ठीक नहीं प्रतीत होता। प्रायः सन्निपात ज्वरों में दूसरा सप्ताह अति भयानक होता है अतः चरक और हारीत के वचनों के अनुसार सात से चौदह दिन तक प्रत्येक दिन कड़ी सतर्कता से व्यवहार योग्य होते हैं। कदाचित् इससे अधिक अर्थात् द्विगुण और कभी त्रिगुण दिन तक भी ज्वर चलता रहता है तथा धातुपाक होने पर मृत्यु और दोषपाक होने पर स्वस्थता होती है।

विभिन्न विभेदक प्रकारों से ज्वरों के विविध भेद पाये जाते हैं। चरक ने कहा है—

**द्विविधो विधिभेदेन ज्वरः शारीरमानसः। पुनश्च द्विविधो दृष्टः सौम्यश्चाग्नेय एव च ॥**
**अन्तर्वेगो बहिर्वेगो द्विविधः पुनरुच्यते। प्राकृतो वैकृतश्चैव साध्यश्चासाध्य एव च ॥**
**पुनः पञ्चविधो दृष्टो दोषकालबलाबलात्। सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥**
**पुनराश्रयभेदेन धातूनां सप्तधा मतः। भिन्नः कारणभेदेन पुनरष्टविधो ज्वरः ॥**

विधिभेद से ज्वर शारीर और मानस दो प्रकार का होता है। सौम्य ( शीतपूर्व ) एवं आग्नेय ( दाहपूर्व ) भेद से भी ज्वर के दो प्रकार हैं। वेगों के भेद से भी अन्तर्वेग और बहिर्वेग नामक ज्वर दो प्रकार का है। प्राकृत और वैकृत ये भी ज्वर के दो प्रकार हैं। ज्वर साध्य और असाध्य भेद से भी दो प्रकार का है। दोष और काल के बलाबल से ज्वर के सन्तत, सतत, अन्येद्युष्क, तृतीयक और चतुर्थक ये पाँच भेद हैं। सप्त धातुओं के आश्रयभेद से ज्वर सात प्रकार का भी है। उत्पादक कारणों के अनुसार ज्वर वातिक, पैत्तिक, श्लैष्मिक, वातपैत्तिक, वातश्लैष्मिक, पित्त-श्लैष्मिक, त्रिदोषज तथा आगन्तुज भेद से आठ प्रकार का होता है।

उपर्युक्त प्रथम सात विधि से भेदों का अन्तर्भाव आठवें में ही हो सकता है। वस्तुतः मौलिक रूप से ज्वर कारणभेद से आठ प्रकार का ही है। अन्य सभी भेदों का विस्तार चिकित्सा-सौकर्यार्थ ही किया गया है। अतः प्रत्येक प्रकार के ज्वर में वात आदि की उल्बणता या अनुबन्ध का ज्ञान करने का प्रयत्न करना चाहिए। प्राचीन आयुर्वेद शास्त्र में दोषों को ही रोगोत्पादक माना गया है क्योंकि किसी भी रोग में चाहे वह निज हो चाहे आगन्तुक, रोग के आरम्भ से ही उसमें वायु, पित्त और कफ इनमें से किसी एक, दो या तीनों के लक्षण मिलते हैं। इससे स्पष्ट है कि किसी भी रोग का आरम्भ दोषप्रकोप पूर्वक ही होता है। इन दोषों के प्रकोपक कारण अनेक हो सकते हैं जैसा कि पहले ही वर्णन किया जा चुका है—**'सर्वेषामेव रोगाणां निदानं कुपिता मलाः। तत्प्रकोपस्य तु प्रोक्तं विविधाऽहितसेवनम्।'** ( पृष्ठ ५७ )

इसी सिद्धान्त के अनुसार अनेक कारणों से उत्पन्न विविध ज्वरों का अन्तर्भाव वातजादि सात भेदों में ही हो जाता है। आजकल आगन्तु ज्वरों के अनेक भेद जीवाणुभेद से वर्णित हैं, अनेक रोगों मे लक्षणस्वरूप भी ज्वर मिलता है। इन सभी का समावेश प्राचीन विद्वान् दोषभेद से वर्णित ज्वरों में ही करते थे क्योंकि अन्ततोगत्वा चिकित्सा दोष के आधार पर ही की जाती है। यह नहीं कि उनको इस विषय का पर्याप्त ज्ञान नहीं था। यह सुश्रुतोक्त निम्न श्लोक से सुस्पष्ट है—

**'रोगाणान्तु समुत्थानाद्विदाहागन्तुतस्तथा। ज्वरोऽपरः सम्भवति तैस्तैरन्यैश्च हेतुभिः ॥**
**दोषाणां स तु लिङ्गानि कदाचिन्नातिवर्तते।'** ( सु. उ. त. अ. ३९ )

आजकल भी विशिष्ट आगन्तु ज्वरों के विभिन्न कारणभूत जीवाणु और उनकी चिकित्सा के लिये प्रयुक्त विशिष्ट द्रव्य ( Specific drugs ) का वर्णन होने पर भी लाक्षणिक या दोषानुसार चिकित्सा करनी ही पड़ती है।

ज्वरोमोक्षस्य पूर्वरूपमाह—

**दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भिदसंज्ञता।**
**कूजनं चास्य वैगन्ध्यमाकृतिर्ज्वरमोक्षणे ॥ ७४ ॥**

ज्वर-मोक्ष के समय शरीर में दाह, स्वेद, भ्रम, प्यास, कम्पन, मलभेद ( अतिसार ), संज्ञानाश, कराहना तथा मुख से दुर्गन्धि का आना ये लक्षण होते हैं ॥ ७४ ॥

ज्वरविमुक्तिपूर्वरूपमाह—दाह इत्यादि। विड्भिदिति। विड्भेदः,सम्पदादिपाठात् भावे क्विप्। असंज्ञता संज्ञानाशः। कूजनं[1] कुन्थनम्। यदुक्तं—'ज्वरप्रमोक्षे पुरुषः कूजेद्वमति चेष्टते' ( च. चि. अ. ३ ) इति। वाग्भटोऽप्याह–'धातून् प्रक्षोभयन् दोषो मोक्षकाले बलीयते। ततो नरः श्वसन् स्विद्यन् कूजन् वमति चेष्टते' ( वा. नि. अ. २ ) इति। वैगन्ध्यं दुर्गन्धता गात्रे। ज्वरमोक्षणे भविष्यति आकृतिर्लक्षणं 'भवति' इति शेषः। ननु, दोषक्षयं विना न व्याधिनिवृत्तिः, क्षीणश्च दोषः कथमेवंविध लक्षणं कुर्यात्? उच्यते—कश्चिद्भावः क्षीणोऽपि विनाशकाले स्वशक्ति दर्शयति, यथा—निर्वाणावस्थो दीपो विशेषात् प्रज्वलति, अथवा दोषाभिभूतानां धातूनां दोषापगमे क्षोभाद्दाहादयः तरलतरवानरपरिहीयमानतरुणतरुवल्लरीशिखरकम्पवदिति ॥ ७४ ॥

विमर्शः—दारुण मोक्ष ( Crisis ) तथा अदारुणमोक्ष (Lysis) भेद से ज्वरमोक्ष दो प्रकार का होता है। दारुण ज्वरमोक्ष तीव्र संक्षोभ के साथ होता है। इसका कारण दोषों की अधिकता, सद्यः ज्वरनाशक क्रियाओं के उपयोग अथवा स्वतः दोषों का शीघ्र परिपाक ही है। चरक ने कहा भी है—

**बहुदोषस्य बलवान् प्रायेणाभिनवो ज्वरः। सत्क्रियादोषपक्त्या चेद् विमुञ्चति सुदारुणम् ॥**

निमोनिया ज्वर में यह लक्षण प्रधान रूप से पाया जाता है।

दोष के स्वभाव के अनुसार सन्ताप आदि लक्षणों को करने के उपरान्त जो ज्वर क्रमशः शनैः शनैः शान्त होते हैं उनका मोक्ष अदारुण कहलाता है—**कृत्वा दोषवशाद् वेगं क्रमादुपरमन्ति ये। तेषामदारुणो मोक्षो ज्वराणां चिरकारिणाम् ॥** ( च. चि. ३-३२८ )

आन्त्रिक ज्वर जैसे दीर्घकालानुबन्धी ज्वरों में उक्त प्रकार का मोक्ष पाया जाता है। चरक ने ज्वरमोक्ष के समय होनेवाले लक्षणों का वर्णन निम्न प्रकार से विस्तारपूर्वक किया है, जो अविकल रूप में दिया जाता है—

**ज्वरप्रमोक्षे पुरुषः कूजन् वमिति चेष्टते। श्वसन् विवर्णः स्विन्नाङ्गो वेपते लीयते मुहुः। प्रलपत्युष्णसर्वाङ्गः शीताङ्गश्च भवत्यपि। विसंज्ञो ज्वरवेगार्तः सक्रोध इव वीक्ष्यते। सदोषशब्दं च शकृद् द्रवं स्रवति वेगवत्। लिङ्गान्येतानि जानीयाज्ज्वरमोक्षे विचक्षणः ॥**
( च. चि. ३ )

अब यहाँ सन्देह होता है कि दोषक्षय से ही व्याधि की निवृत्ति होती है, क्षीण दोष इस प्रकार की व्याकुलता उत्पन्न करने वाले लक्षण कैसे उत्पन्न करता है? इस पर कहते है कि दोष के सहसा हटने से दोषाक्रान्त धातुओं में क्षोभ होता है जिससे उक्त लक्षण होते हैं। जैसे कि बुझने के पहिले चिराग चमकता है। ज्वरमोक्ष के ये लक्षण त्रिदोषज अन्तर्वेग एवं धातुगत सन्तत स्वरूप के ज्वर से पीडित रोगियों में ही मिलते हैं। अन्यत्र केवल पसीना आता है जैसा कि भालुकितन्त्र में कहा है—**त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे। लक्षणं मोक्षकाले स्याद्न्य-**

१. 'अस्फुटध्वनिः' इति पा०।

स्मिन् स्वेददर्शनम् ॥ रोगी की यह अवस्था अत्यधिक भयङ्कर होती है, कभी-कभी इसमें भी रोगी की मृत्यु हो जाती है अतः इस अवस्था में रोगी का विशेष ध्यान रखना चाहिए।

ज्वरमुक्तलक्षणं निरूपयति—

**स्वेदो लघुत्वं शिरसः कण्डूः पाको मुखस्य च।**
**क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥ ७५ ॥**(सु. उ. अ. ३३)

**इति श्रीमाधवकरविरचिते माधवनिदाने ज्वरनिदानं समाप्तम् ॥ २ ॥**

पसीना आना, शरीर में हलकापन, सिर में खुजली, मुखपाक, छींक आना तथा भूख लगना ये ज्वर मुक्त के लक्षण हैं ॥ ७१ ॥

ज्वरमुक्तिलक्षणमाह—स्वेद इत्यादि। स्वेदो घर्मागमनं स्रोतसां स्फुटत्वात्। लघुत्वं गात्रस्य। शिरसः कण्डूरिति सर्वो हि ज्वरस्तैजसः, विरोधिध्यपगमात् सौम्यः श्लेष्मा लब्धबलः सञ्छिरसि स्वस्थानेऽसाधारणात्मलक्षणं कण्डूं करोति, व्याधिमहिम्ना नान्यत्र कफस्थाने इति वदन्ति। पाको मुखस्येति ज्वरोष्मकोपितपित्तात्, यत्तु पूर्वं नाक्षार्षीदन्यत्र वा तदपि व्याधिमहिम्नैव। एतच्च दाहमारभ्य लक्षणं त्रिदोषजेऽन्तर्वेगे ज्वरे भवति, नतु सर्वत्र। तथा चैतदनन्तरं भालुकिः प्राह:—'त्रिदोषजे ज्वरे ह्येतदन्तर्वेगे च धातुगे। लक्षणं मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम्'—इति। ननु ज्वरस्य प्रत्यक्षत्वात्तस्याभावोऽपि प्रत्यक्षः, तत् किं तल्लक्षणपाठेन? तथाऽपि वा पठितव्यं, तर्हि सर्वाविकारेषु पठ्यताम्? उच्यते—विषमज्वरशङ्कानिरासार्थं, विषमज्वरो निवृत्तोऽपिपुनरायाति, दोषाणां धातुलीनत्वात् एतल्लक्षणे तु निःशेषदोषनिवृत्त्या न पुनरागमः। यत्र चैवंविधा शङ्का तत्रैव लक्षणं पठित न सर्वत्र, यथा प्रमेहातीसारादिष्विति सर्वं सुस्थम् ॥ ७५ ॥

इति श्रीविजयरक्षितकृतायां मधुकोशव्याख्यायां ज्वरनिदानं समाप्तम् ॥ २ ॥

**विमर्शः**—स्रोतों के निर्मल हो जाने से स्वेद की प्रवृत्ति होती है। ज्वर तैजस होता है, अतः ज्वरमुक्तावस्था में उसका विरोधी कफ बलवान् होकर अपने स्थान सिर में खुजली उत्पन्न करता है। चरक ज्वर-मुक्ति का लक्षण निम्न प्रकार से करते हैं—

**विगतक्लमसन्तापमव्यथं विमलेन्द्रियम्। युक्तं प्रकृतिसत्त्वेन विद्यात् पुरुषमज्वरम् ॥**

अर्थात् जिस रोगी में क्लम तथा बाह्य या अभ्यन्तर किसी प्रकार का सन्ताप न रहे, जिसका मन भी प्रसन्न हो, जिसकी इन्द्रियाँ भी अपनेःअपने विषय का यथावत् ग्रहण करने में समर्थ हों एवं स्वाभाविक प्रकृति के लक्षण व्यक्त हो जायें तथा जिसमें स्थिरता एवं भूख-प्यास की प्रवृत्ति भी हो उसे ज्वरमुक्त समझना चाहिए।

यद्यपि ज्वरमोक्ष प्रत्यक्ष अनुभूत होता है फिर भी ज्वरमुक्ति के लक्षण-ज्ञान का आवश्यकता विषमज्वर की आशकानिवृत्ति के लिए है क्योंकि एक बार मोक्ष होकर पुनः भी विषमज्वर में ज्वरवृद्धि हो जाती है। कुछ ज्वरों में प्रत्यक्ष तापक्रम कम होने पर भी ग्लानि, गौरव आदि लक्षण उपस्थित रहते हैं। कभी-कभी तो यह अवस्था कृच्छ्रसाध्यता अथवा असाध्यतानिदर्शक होती है। जैसे मस्तिकगत दुष्ट विषमज्वर, शीताङ्गसन्निपात ज्वर आदि। अत एव ज्वर वास्तव में मुक्त हो गया है इस बात के ज्ञान के लिये ज्वरमुक्तिलक्षण का भी ज्ञान आवश्यक है।

ऐसे लक्षणों का केवल उन्हीं रोगों में वर्णन किया गया है जहाँ उनके पुनरावर्तन की आशका रहती है। जैसे प्रमेह, अतिसार आदि।

समाप्तं चेदं ज्वरनिदानम्।

# अथातीसारनिदानम्

गुर्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः ।
विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकाद् दुष्टाम्बुमद्यातिपानैः सात्म्यर्तुपर्ययैः ॥ २ ॥
जलाभिरमणैर्वेगविघातैः क्रिमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥३॥ (सु. उ. ४०)

गुरु[1] अतिस्निग्ध, अतिरूक्ष, अत्युष्ण, अतिद्रव, अतिस्थूल एवं अतिशीतल पदार्थों का सेवन, विरुद्धाशन[2] अध्यशन[3], अपरिपक्व तथा विषम भोजन[4] करने से, स्नेहन, स्वेदन (पूर्वकर्म) तथा शिरोविरेचनातिरिक्त पञ्चकर्म के अतियोग या मिथ्यायोग से, विषप्रयोग, भय, शोक, दूषित जल तथा मद्य के पान करने या (अदूषित भी) जल और मद्य के अतिपान करने से, ऋतुविपर्यय एवं सात्म्यविपर्यय से, अत्यधिक जलक्रीडा, वेगविधारण तथा क्रिमीदोष से मनुष्यों को अतिसार होता है। आगे उसका लक्षण कहा जायगा ॥ १-३ ॥

पित्तज्वरेऽतीसारपाठाज्ज्वरातीसारयोरन्योन्योपद्रवत्वाच्च ज्वरानन्तरमतीसारमाह—गुर्वित्यादि । गुरुशब्देन मात्रागुरु गृह्यते, यथाऽतिमात्रोपयुक्तो रक्तशाल्यादिः, तथा स्वभावगुरु च माषादिः; अथवा गुणतः पाकतश्च । अतिशब्दः स्थूलान्तैः सह संबध्यते । स्थूलं संहतावयवं यथा—लड्डुकपिष्टकादि । शीतलं स्पर्शाद्वीर्याच्च । विरुद्धमिति संयोगदेशकालमात्रादिभिर्विरुद्धं, यथा—क्षीरमत्स्यादि; तच्च बहुप्रकारं सुश्रुते हिताहितीयेऽध्याये (सु. सू. अ. २०), चरके चात्रेयभद्रकाप्यीयाध्याये[1] (च. सू. अ. २६) द्रष्टव्यम् । अध्यशनं पूर्वदिनाहारेऽजीर्णे भोजनम् । उक्तं हि चरके—'भुक्तं[2] पूर्वान्नशेषे तु पुनरध्यशनं मतम्' (च. चि. अ. १५) इति । एवं सर्वत्र । अजीर्णम् अपक्वमन्नम् । विषमम् अकालादिभोजनम् । उक्तं हि सुश्रुते—'बहु स्तोकमकाले वा तज्ज्ञेयं विषमाशनम्' (सु. सू. अ. ४६) इति । एवं सर्वत्र । 'विषमैः' इत्यत्र स्थाने 'असात्म्यैः' इति पाठान्तरम् । भोजनैरिति विरुद्धादिभिः सर्वैः सम्बध्यते । स्नेहाद्यैरिति स्नेहः स्नेहपानं, स्नेह आद्यो येषां ते स्नेहाद्याः स्वेदवमनविरेचनानुवासननिरूहाः, तैरतियुक्तैरिति अतियोगयुक्तैः । एतच्च यथायोग्यं बोध्यं, वमनातियोगस्यातिसारकारणत्वायोगात् । मिथ्यायुक्तैरिति हीनयोगयुक्तैः, वमनादिकर्मणां मिथ्यायोगाभावात्, हीनयोगात्तु ते दोषानुत्क्लेश्यातीसाराय स्युः । ननु, कदाचिद्वमनं प्रयुक्तं विरेकं करोति, विरेकश्च वमनमिति दर्शनात्तेषां मिथ्यायोगः संभवत्येव । न, सोऽप्ययोग एवेति सिद्धान्तः । यदुक्तं चरके—'योगः सम्यक् प्रवृत्तिः स्यादतियोगोऽतिवर्तनम् । अयोगः प्रातिलोम्येन न चाल्पं वा प्रवर्तनम्' (चि. सि. अ. ६) इति । विषमत्र स्थावरमुच्यते, अधोगत्वात्;

---

१. गुरु—मात्रागुरु यथा स्वभावगुरु, यथा उड़द आदि ।

२. विरुद्धभोजन—संयोगविरुद्ध, देशविरुद्ध, कालविरुद्ध, मात्राविरुद्ध, अग्निविरुद्ध, सात्म्यविरुद्ध, अभ्यासविरुद्ध, संस्कारविरुद्ध, कोष्ठविरुद्ध, अवस्थाविरुद्ध, क्रमविरुद्ध, परिहारोपचारविरुद्ध, पाकविरुद्ध, हृद्विरुद्ध, सम्पद्विरुद्ध और विधिविरुद्ध ।

३. भुक्तं पूर्वान्नशेषे तु पुनरध्यशनं मतम् । ४. बहुस्तोकमकाले च तज्ज्ञेयं विषमाशनम् ।

---

१. 'भद्रकालीयाध्याये' इति क ख । २. 'पूर्वाह्णशेषे' इति क ख ।

